॥ श्रीः ॥

...संस्कृत ग्रन्थमाला ५०

# ...यौगन्धरायणम्

...-हिन्दी-व्याख्योपेतम्

व्याख्याकारः-

डा० रमाशंकर मिश्रः

चौखम्बा अमरभारती प्रकाशन

पत्रमञ्जूषा-संख्या ११३८

वाराणसी-२२१००१ (भारत)

॥ श्रीः ॥

हरजीवनदास संस्कृत ग्रन्थमाला

५०



भासनाटकचक्रे

# प्रतिज्ञायौगन्धरायणम्

'अर्चना' संस्कृत-हिन्दी व्याख्योपेतम्

व्याख्याकारः—

डॉ० रमाशंकर मिश्रः

आचार्य (नव्यव्याकरण, साहित्य-वेदान्त), एम० ए० (संस्कृत),
विद्यावारिधि (पी० एच० डी०), वाचस्पति (डी० लिट्)
श्री हरदेवदास नथमल वैरोलिया आदर्श संस्कृत
महाविद्यालय, टेढ़ीनीम-वाराणसी (उ० प्र०)

चौखम्बा अमरभारती प्रकाशन
पत्रमञ्जूषा-संख्या ११३८
वाराणसी-२२१००१ (उ० प्र०)
फोन नं० ३२३५...

प्रकाशक
चौखम्बा अमरभारती प्रकाशन
के ३७/१३०, गोपाल मन्दिर लेन
पत्रमञ्जूषा-संख्या ११३८
वाराणसी-२२१००१ ( भारत )
फोन : ३३३५०८



प्रथम संस्करण, सन् १९९२ ई०
वि० सं० २०४९
मूल्य : रु० २०-००

अन्य प्राप्तिस्थान
चौखम्बा संस्कृत पुस्तकालय
कचौड़ी गली
वाराणसी-२२१००१



मुद्रक—सरिता प्रेस, भैरवनाथ, वाराणसी।

# प्रास्ताविकम्

कविताकामिन्याः हासभूतस्य महाकवेर्भासस्य धवलं यशः संस्कृतसन्दब्ध-रूपकपरम्परायां नभसि भ्राजमानोऽम्बरमणिरिव सर्वत्र विद्योतते। कविवरेण्योऽयं 'नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम्' इति कालिदास-भणितिं स्वीयैः नाटकनिचयैः सर्वथा सार्थकतामापादयति। महाकविभास-विरचितानां नाटकानां सम्यगनुशीलनेन तदध्येतारः किमप्यनिर्वचनीयमानन्दं स्वचेतसि लभन्त इत्यत्र नास्ति काचित् संशीतिः। कवेरस्य चमत्कारिण्यो रमणीयाश्च लोकोक्तयः—

"आपदं हि पिता प्राप्तो ज्येष्ठपुत्रेण तार्यते। ( मध्यमव्यायोगः )
रुष्टोऽपि कुञ्जरो वन्यो न व्याघ्रं घर्षयेद्वने॥"
चक्रारपंक्तिरिव गच्छति भाग्यपङ्क्तिः (स्वप्नवासव०)
इत्यादयः केषां सचेतसां चेतांसि प्रसभं नावर्जयन्ति।

## महाकवेः भासस्य कालः—

महाकविः भासः स्वजनुषा भारतभुवं कदा समलञ्चकार इत्यस्मिन् विषये सर्वे सुधियः सन्दिहन्ति। महाकविः कालिदासः स्वीये नाटके कवि-पुङ्गवं भासं सबहुमानं स्मरति। यथा—

'प्रथितयशसां भाससौमिल्लकविपुत्रादीनां प्रबन्धानतिक्रम्य कथं वर्तमानस्य कवेः कालिदासस्य कृतौ बहुमानः।' ( मालविकाग्निमित्रम् )

एतेन कालिदासात् प्राचीनता भासस्यापद्यिता। कालिदासस्य परवर्तिनः कवयोऽपि महाकवेः भासस्य संस्मरणं विहितवन्तः। यथा बाणभट्टः स्वीये हर्षचरिते—

'सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः।
सपताकैर्यशो लेभे भासो देवकुलैरिव॥'

इति प्रोच्य भासस्य महिमानं वर्णयति। राजशेखरः काव्यमीमांसायाम्—

'भासनाटकचक्रेऽस्मिंश्छेकैः क्षिप्ते परीक्षितुम्।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः॥'



इति निगद्य भासविरचितेषु नाटकेषु स्वप्नवासवदत्तस्य सर्वातिशायि

महत्त्वमङ्गीकरोति । वाक्पतिराजः स्वीये 'गउडवहो' इत्याख्ये प्राकृतप्रबन्धे—

'भासम्मि जलणमित्ते कान्तिदेवे तहावि रहुआरे ।
सोबन्धवे अ बन्धम्मि हारे अन्दे अ आमन्दो ॥'

इति निगदन् भासं ज्वलनमित्रं विनिर्दिशति । विश्वविदितयशा आलङ्कारिको जयदेवः प्रसन्नराघवस्य प्रस्तावनायाम्—

'यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरः
भासो हासः कविकुलगुरुः कालिदासो विलासः ।
हर्षो हर्षः हृदयवसतिः पञ्चबाणः स बाणः
केषां नैषां कथय कविताकामिनी कौतुकाय ॥'

इति प्रोच्य कविवरेष्वपि भासं कविताकामिन्याः हासं सम्मनुते । वाक्पतिराजेन स्वीये 'गउडवहो' इत्याख्ये प्राकृतप्रबन्धे भासस्य कृते 'ज्वलनमित्रं' यद्विशेषणं दत्तम्, तस्य समर्थनं विदधत् द्वादशशताब्दीसम्भूतो जयानको नाम कविः स्वीये 'पृथ्वीराजविजय' नामके काव्ये—

'सत्काव्यसंहारविधौ खलानां दीप्तानि वह्नेरपि मानसानि ।
भासस्य काव्यं खलु विष्णुधर्मं सोऽप्याननात् पारदवन्-मुमोच ॥'

इत्यभिधाय कथामेकां प्रतीङ्गितं करोति । सा च कथा अधोऽङ्किता विद्यते । तद्यथा—भासो व्यासश्च प्राचीनमुनी 'विष्णुधर्म' नामकं ग्रन्थं स्वस्वविनिर्मितं प्रकर्षपरीक्षार्थं पावके प्रचिक्षिपतुः । वह्निश्च विष्णुधर्मं भासकृतं नाधाक्षीदिति । राजशेखरः स्वकविविमर्शे—

'भासो रामिलसौमिलौ वररुचिः श्रीसाहसाङ्ककवि-
र्मेण्ठो भारविकालिदासतरलाः स्कन्धः सुबन्धुश्च यः ।
दण्डी बाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः
सिद्धा यस्य सरस्वती भगवती के तस्य सर्वे वयम् ॥'

'कारणं तु कवित्वस्य न सम्पन्नकुलीनता ।
धावकोऽपि हि यद्भासः कवीनामग्रिमोऽभवत् ॥'

इत्येवंरूपेण लिखितवान् ।

आचार्यहेमचन्द्रेण दण्डिकृतकविहृदयव्याख्यायां स्वकृतायां लिखितं भासप्रसङ्गे—

'सम्प्रति परांकाष्ठामारूढेनापि भासेन भूतपूर्वा स्वीया दशा न विस्मृता। यतोऽनेन पूर्वचरितं घटखर्परेणोदकवहनमेव प्रतिज्ञातम्। प्रतिज्ञां चेमामसहमानाः परे कवयः परिहसितुमनसो विक्रमार्कसभ्यमेनं भासं तज्जातिस्मारकघटखर्परनाम्ना व्यवजह्रुः। क्रमेण च स एव व्यपदेशो भासमहाकवेः सुप्रसिद्धः समपन्नः।'

प्रतिमानाटके वृहस्पतेरर्थशास्त्रं स्मृतं, न चाणक्यस्य। एतेन चाणक्यात् प्राचीनता भासस्यापतिता। भासस्य—

'नवं शरावं सलिलैः सुपूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम्।
न तस्य मा भून्नरकं स गच्छेद् यो भर्तृपिण्डस्य कृते न युध्येत्॥'

पद्यमिदमुद्धरता चाणक्येनापि सा समर्थिता।

भरतप्रवर्त्तितनाटकीयनियमानां समादरो भासेन स्वकृतौ न विहितः। यथा स्थापनायां न कविनामनिर्देशः, अवतरणस्य स्थापना नाम्ना निर्देशो न प्रस्तावनानाम्ना। नान्दीपाठात् परतः सूत्रधारप्रवेशः। भरतवाक्यं विनापि ग्रन्थावसानः, मृत्युनिद्रायुद्धानां रङ्गमञ्चेऽवतारणा च। एतेन तस्य भरतप्राचीनताऽऽयाता।

महाकविना भासेन पाणिनिप्रवर्तितनियमानामनुरोधो नाचरितस्तेन तस्य पाणिन्यपेक्षया प्राचीनत्वम्।

एभिर्निगदितैः कारणैः भासस्य प्राचीनता सुतरां सिद्धा भवति। सा च प्राचीनता कालिदासादपि प्राचीनमिमं साधयन्ती १०० ई० पूर्वमितं कालं भासस्य बोधयति।

'प्रोफेसर बर्नट' महाशयो 'मत्तविलास' नामकग्रन्थेन सहैषां भासकृतत्वेन प्रथमानां रूपकाणां सम्बन्धविशेषमवलोक्य खीष्टसप्तमशतकं भासस्य कालमङ्गीकरोति।

'स्टेनकोनो' 'विन्टरनिज' महाशयौ तु प्राकृतभाषापर्यालोचनया कालिदासाश्वघोषयोः प्राकृतयोर्यौ कालौ तदन्तरालवर्ती कोऽपि कालो भासप्राकृतस्येति निश्चित्य खीष्टद्वितीयचतुर्थशतकयोरन्तराले कदाचिद् भासो बभूवे'ति तर्कयतः।



महामहोपाध्यायो रामावतारशर्मा शूद्रकविरचितस्य मृच्छकटिकस्य

कुत्सितं संक्षेपमात्रं चारुदत्तमिति दुर्बलमाधारं समाश्रित्य ख्रीष्टद्वादशशतकोद्भवत्वं भासस्य स्वीचकार ।

सर्वमिदं विभावयन् जनः काममपि सन्देहदोलामिवाधिरोहति । तत्रेदं विचारणीयं विद्यते यत् केवलेन प्राकृतभाषाविचारेण कालो निर्णेतुमशक्य एव, भासस्य रूपकाणां केरलेऽश्वघोषरूपकस्य च बाह्लीकेषूपलम्भात् । ख्रीष्टद्वितीयशतकोत्कीर्णेषु रुद्रदामशिलालेखेषु दृश्यमाना कृत्रिमा काव्यशैली भासनाटकेषु न दृश्यते, प्राचीनाः पाणिनिनाऽविचारिताः प्रयोगाश्चावलोक्यन्ते । पञ्चरात्रस्य कथा सम्प्रति समुपलभ्यमाने महाभारते न विद्यते । अतिप्राचीनाऽऽलङ्कारिको भामहो भासरचितस्य प्रतिज्ञायौगन्धरायणस्य समालोचनां विहितवान् । एतावता प्रागुपन्यस्तास्तर्का भासस्य कालः ख्रीष्टपूर्वं चतुर्थशतकमिति बोधयितुमलम् । परमियं भासकालस्य पूर्वसीमा । अपरा सीमा ख्रीष्टद्वितीयं शतकम् । यतोऽनेन कौटिल्यार्थशास्त्रमस्मृत्वा बार्हस्पत्यं तत्स्मृतं, पाणिनिविरुद्धप्रयोगो विहितः, कालिदासश्चामुं स्वग्रन्थे सस्मार । तदञ्च 'ख्रीष्टपूर्वचतुर्थशतकस्य' ख्रीष्टद्वितीयशतकस्य च मध्ये कदाचिद् भासो बभूवेति स्थूलरूपेण वक्तुं शक्यमिति शम् ।

## भासस्य द्विरवतारः—

यद्यपि नैके विद्वांसो गणपतिशास्त्रिणा प्रकाशितानि निखिलान्यपि नाटकानि प्राचीनभासरचितानीति प्रोक्तवन्तः, प्रमाणानि च समुपस्थापितवन्तः, किन्तु जातेन नैकविधानुसन्धानेनैषां प्रणेता प्राचीनो भासो न सिद्ध्यति, यतो भासकृतत्वेनोदाहृतानि पद्यानि लभ्यमानग्रन्थेषु नासाद्यन्ते । एतावता सर्वाणि रूपकाणि केरलदेशीयेन केनचित् कविना विरचितानीति वक्तुं शक्यते । महामहोपाध्यायरामावतारशर्माऽपि लभ्यमानरूपकाणामंशविशेषा एव भासकृता इति मन्यते । अतएव चैषां केरल एवोपलब्धिरिति समुपन्यस्यति तदुपोद्बलकं प्रमाणम् । केरलीया नटा अद्यापि भासरूपकाण्यभिनीय लोकान् रञ्जयन्ति । अस्यां स्थितौ समुचितमिदं प्रतिभाति यद् भासद्वयं मन्यताम् , तत्रैको प्राचीनो भासो यो महाकविकालिदासादिना संस्मृतः । अपरश्च केरलीयो नवो द्वादशशताब्दीसमुद्भवो भासो यस्य रूपकाणि चतुर्दश महामहोपाध्यायं गणपतिशास्त्रिभिः प्राकाश्यं नीतानि ।

## भासस्य रूपकनिर्माणवैशिष्ट्यम्

नैकेषां रूपकाणां प्रणेता भासो जीवनस्य विविधानि क्षेत्राणि दृशोः पात्रतां नीतवानिति वक्तुं शक्यते। अयमेव हेतुर्यदस्य नाटकेषु विविधता समवलोक्यते। एतदीयरूपकेषु कतिचन पूर्णविकसितानि विद्यन्ते, यथा—स्वप्नवासवदत्तम्, प्रतिज्ञायौगन्धरायणम्, प्रतिमानाटकञ्चेत्यादीनि। मध्यमव्यायोग-दूतघटोत्कच-दूतवाक्य-कर्णभारोरुभङ्गानि एकाङ्करूपकाणि निगदितुं शक्यन्ते। भासनाटकेषु अभिनययोग्यतैवासाधारणभावेन संस्थिता तानि प्रख्यापयति। एषां नाटकानामादितोऽन्तं यावदभिनये सौकर्यम्, सुबोधा सरला समासवती च वाक्यावलिः, पात्राणामविस्तृतानि कथोपकथनानि इत्यादिका अभिनय हेतवश्च सर्वेषु रूपकेषु समवलोक्यन्ते। भासः संवादतत्त्वाभिज्ञ इत्यनेन हेतुना तद्विरचितानि सर्वाणि रूपकाणि संवादसौष्ठवं धारयन्ति। भासः स्वेषु नाटकेषु स्वाधारभूताः कथास्तथैव समुपवर्ण्य केवलेन सरलत्वकथोपकथनचातुर्यादियोजनेन तानि रमणीयतां प्रापयतीति महाकवेः भासस्य रूपकनिर्माणवैशिष्ट्यं सुधीभिःसुखेनावगन्तुं शक्यते।

## भासकृतिभिरन्यकविकृतिसाम्यम्

महाकवेः भासस्य कृतयोऽन्येषां कृतिभिः साकं पर्याप्तं साम्यं बिभ्रति। यथा महाकविकालिदासविरचितस्याभिज्ञानशाकुन्तलस्य तुरीयेऽङ्के विटपलतादीन् प्रति शकुन्तलायाः यः कोमलो मनोभावः 'पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या' इत्यादिना वर्णितस्तत्समान एव भासविरचितेऽभिषेकाऽऽख्ये नाटके 'यस्यां न प्रियमण्डनापि महिषी देवस्य मन्दोदरी' इत्यादौ मनोभावः समुपवर्णितः संदृश्यते। अनेनैव प्रकारेण यथा शाकुन्तले आश्रमवासिनां पीडनं परिहर्तुं समादिश्यते, तथैव स्वप्नवासवदत्ते—'न परुषमाश्रमवासिषु प्रयोज्यम्' इत्यादिश्यमानं सुधीभिः समवलोक्यते। इत्थमेव तत्रैव शाकुन्तले—'तव सुचरितमङ्गुलीय नूनं प्रतनु ममेव विभाव्यते फलेन' इति दुष्यन्तेनाङ्गुरीयकं प्रत्युच्यते, तथैव स्वप्नवासवदत्ते—'श्रुतिसुखनिनदे कथं नु देव्याः स्तनयुगले जघनस्थले च सुप्ता' इति वीणादौर्भाग्यमाख्यायते। अनयैव रीत्या शूद्रकस्य मृच्छकटिकेन साकं दरिद्रचारुदत्तस्य

सर्वांशगतं सादृश्यं समुपलभ्यते। तदत्र केन कस्याधमर्ण्यमङ्गीकृतमिति विचारे क्रियमाणे कालिदासशूद्रकौ एवोत्तमर्णौ, भास एव तयोरधमर्ण इति मदीयो विश्वासस्तत्राऽयं भासो द्वितीय इति। प्रथमो भासः कालिदासादीनां पथप्रदर्शक आसीत्, परं तदीयाः कृतयः साम्प्रतं नोपलभ्यन्ते। यश्चायं केरलीयोरूपकसमूहः, स तु द्वितीयभासस्य। एवं मन्यमाने सति सर्वमप्युपपन्नं भवतीति शम्।

## भासस्य रूपकाणां समासेन परिचयः

महाकवेः भासस्याधोऽङ्कितानि त्रयोदशरूपकाणि प्रथितानि विद्यन्ते। तद्यथा—१—प्रतिज्ञायौगन्धरायणम्, २—अविमारकम्, ३—स्वप्नवासवदत्तम्, ४—प्रतिमानाटकम्, ५—अभिषेकनाटकम्, ६—मध्यमव्यायोगः, ७—पञ्चरात्रम्, ८—दूतवाक्यम्, ९—दूतघटोत्कचम् १०—कर्णभारः, ११—ऊरुभङ्गम्, १२—बालचरितम्, १३—दरिद्रचारुदत्तमिति। गोण्डलनिवासी राजवैद्यजीवरामकालिदासमहोदयः १९४१ खीष्टाब्दे 'यज्ञफलम्' इति नामकं रूपकं प्रकाशितवान्, तदपि भासकृतित्वेनाऽऽख्यायते। इत्थं सम्मेल्य भासस्य चतुर्दशरूपकाणि वर्तन्ते। एषु प्रतिज्ञायौगन्धरायणम्—स्वप्नवासवदत्तम्—अविमारकञ्चेति त्रीणि रूपकाणि बृहत्कथाऽऽधारीकृत्य राजन्ते। प्रतिमानाटकमभिषेकनाटकञ्चेति द्वे रामायणमूले। मध्यमव्यायोगः पञ्चरात्रम्—दूतघटोत्कचम्—कर्णभारः—ऊरुभङ्गम्—यज्ञफलम्—दूतवाक्यञ्चेति सप्त नाटकानि महाभारताश्रयाणि विद्यन्ते। बालचरितं भागवताश्रयम्, दरिद्रचारुदत्तञ्च कल्पितकथमिति निष्कर्षः।

प्रतिज्ञायौगन्धरायणम्—नाटकेऽस्मिन् मन्त्रिणो यौगन्धरायणस्य नीतिरुदयनवासवदत्तयोः प्रणयकथा चात्रोपनिबद्धा विद्यते। रूपकमिदं 'स्वप्नवासवदत्तम्' इत्याख्यनाटकस्य प्राग्वर्तिनाटकमस्तीति वक्तुं शक्यते। वत्सराज उदयनोऽत्र कृत्रिमवारणच्छलेन महासेनेन कारागारे निक्षिप्यते तदाऽमात्यो यौगन्धरायणस्तं बन्धनान्मोचयितुं वासवदत्तया साकं परिणयं कारयितुञ्च प्रतिश्रुतिं विदधाति। मन्त्रिणः सुदृढायाः कुटिलनीतेश्च 'सर्वोत्कृष्टं निदर्शनमिदम्। तथ्यमेनमाधारीकृत्यैव नाटकस्यास्याभिधानं प्रतिज्ञायौगन्धरायणम्' विद्यते।

अविमारकम्—रूपकस्यास्य कथा सम्भवतो गुणाढ्यरचितबृहत्कथातः संगृहीता वर्तते । 'अविमारक' इति नाम्ना प्रथितस्य सौवीरनृपतेरात्मजस्य विष्णुसेनस्य कुन्तिभोजकुमार्या कुरङ्गया साकं प्रणयोऽत्र चारुतया समुपवर्णितः ।

स्वप्नवासवदत्तम्—भासकृतिषु सर्वोत्तमा कृतिरियम् । नाटकेऽस्मिन् मन्त्री यौगन्धरायणो मगधराजभगिन्या पद्मावत्या साकमुदयनस्य परिणयं कारयित्वा राजशक्तिं वर्द्धयितुमियेष । संस्थितायां वासवदत्तायां कार्यमिदं न सम्भवतीति विचार्य वासवदत्ताया अनुमतिमासाद्य कदाचिदुदयने मृगयार्थं वनं गते सति लावणककानने वासवदत्ता दग्धेति प्रचार्यते । भूपतिरुदयनश्चिरं विषादमनुभूयापि तत्प्रेमणि मालिन्यं नाऽऽनयति । पश्चात् परिणीतायां पद्मावत्यां स्वप्नक्रमेणैव वासवदत्ता लभ्यते ।

प्रतिमानाटकम्—नाटकेऽस्मिन् रामायणप्रोक्तं रामस्य पूर्वचरितमुपनिबद्धमस्ति । रामवनगमन-सीतापहरणादारभ्य दशाननवधात्मिका कथा चारुतयाऽत्र समुपवर्णिता विद्यते । भरतविरचितनाट्यशास्त्रनियमानवमत्य सप्ताङ्कसमन्वितेऽस्मिन् नाटके राज्ञो दशरथस्य पञ्चत्वगमनं रङ्गमञ्चस्थल एवाभिनीयते । पुरा भारतीयानां भूपतीनां देवकुलान्यासन्, येषु परलोकसनाथितानां राज्ञां प्रतिमाः संस्थापिताः भवन्ति स्म । राज्ञो दशरथस्यापि प्रतिमा तत्र संस्थापिता आसीत् । रामानुजो भरतः स्वमातुलगृहात् परावर्त्य पथि नगराद् बहिः देवकुलसंस्थापितां दशरथप्रतिमां समवलोक्य निजजनकस्य मृत्योरनुमानं विदधाति । विषयममुमाधारीकृत्य रूपकस्यास्याभिधानं 'प्रतिमानाटकम्' विद्यते ।

अभिषेकनाटकम्—रामायणोक्ता बालिवधादारभ्य रामराज्याभिषेकान्ता कथा नाटकेऽस्मिन् सुष्ठु वर्णिता संदृश्यते ।

मध्यमव्यायोगः—रूपकेऽस्मिन् मध्यमपाण्डवेन भीमेन मध्यमविप्रतनयस्य सुरक्षा, हिडिम्बानामक-राक्षस्या साकं भीमस्य प्रणयकथा च समुपवर्णिता अस्ति ।

पञ्चरात्रम्—नाटकेऽस्मिन् महाकविः भासो महाभारतीयायाः कथायाश्चित्रणं स्वकल्पनाशक्त्याऽऽधारेण प्रत्ययप्रकारेण विहितमस्ति । द्रोणेन कौरवाणां यागे आचार्यकर्त्तं कृतम्, दक्षिणायां स पाण्डवानां कृते अर्ध-

राज्यं संयाचितवान् । पञ्चदिवसाऽभ्यन्तरे पाण्डवानामन्वेषणे क्रियमाणे लभ्यं तदिति दुर्योधनस्याश्वासने द्रोणेन तथैव विहितम् ।

दूतवाक्यम्—रूपकेऽस्मिन् दूतभूतस्य श्रीकृष्णस्य सदाशयता सहैव दुर्योधनस्याभिमानित्वं वर्णितमस्ति ।

दूतघटोत्कचम—नाटकेऽस्मिन् अभिमन्योः पञ्चत्वगमनेन शोकसन्तप्तस्य कुपितस्यार्जुनस्य शपथाऽनन्तरं हिडिम्बाभीमयोरात्मजो घटोत्कचः दूतो भूत्वा पाण्डवपक्षतः दुर्योधनाऽन्तिकं विनाशसूचनां प्रदातुं व्रजति । घटोत्कच-दुर्योधनयोर्मध्ये सम्भूतस्य संलापस्य चित्रणमत्र चारुतया विलसति ।

कर्णभारः—अस्मिन्नेकाङ्के नाटके कर्णस्योदात्तं चरितं वर्णितं संदृश्यते । अत्र हि कर्णो याचमानाय शक्राय कवचकुण्डले प्रददाति ।

उरुभङ्गम्—अत्र प्रियापरिभवप्रतप्तेन भीमेन दुर्योधनस्य जङ्घे भग्ने । संस्कृतवाङ्मये शोकान्तनाटकस्येदमेकं निदर्शनम् ।

बालचरितम्—पञ्चाङ्कसमन्विते नाटकेऽस्मिन् श्रीकृष्णजन्मवृत्तान्तादारभ्य कंसवधान्ता कथा चारुतया समुपवर्णिता विद्यते । भागवताधारेणात्र भगवतः श्रीकृष्णस्य बाललीला मनोहारिण्या रीत्या चित्रिता अस्ति ।

दरिद्रचारुदत्तम्—रूपकेऽस्मिन् वसन्तसेनाचारुदत्तयोः प्रणयकथा चित्रिता वर्तते । रूपकस्यास्य चत्वार एवाङ्का समुपलभ्यन्ते ।

यज्ञफलम्—रूपकस्यास्य युधिष्ठिरयज्ञसम्बन्धी कथाभागः अत्यल्प एव राजते ।

समेषामेषां नाटकानामेककर्तृकत्वम्—उपरिनिर्दिष्टनामानि नाटकानि समानकर्तृकाणि सन्ति । यतो ह्येषु आश्चर्यजनकं साम्यं संदृश्यते । यथा—

१—इमान्यशेषाणि रूपकाणि—'नान्द्यन्ते ततः प्रविशति सूत्रधारः' इत्येभिरेव शब्दैः प्रारभ्यन्ते ।

२—नाटकेष्वेषु क्वापि प्रणेतुर्नामपरिचयादिकञ्च नासाद्यन्ते ।

३—प्रायः सर्वत्र प्रस्तावनायाः स्थाने स्थापनाशब्दप्रयोगो विहितः । कर्णभारमात्रे प्रस्तावनाशब्दप्रयोगः ।

४—रूपकेष्वेषु सर्वत्र भरतवाक्यं समानमेव संदृश्यते ।

५—नाटकानामेषां भाषाऽऽश्चर्यजनकं साम्यं धारयति ।

६—अशेषेष्वप्येषु नाटकेषु पताकास्थानस्य मुद्रालङ्कारस्य च समानः प्रयोगश्च क्वास्ति ।

७—अप्रधानपात्राणामभिधानसाम्यम्, व्याकरणलक्षणहीनप्रयोगप्राचुर्यम्, समानं वाक्यम्, प्रायः सर्वत्र बाहुल्येन सम्प्राप्यते ।

८—भरतप्रणीतनाट्यशास्त्रीयनियमानां सर्वत्र तुल्योऽनादरः समुपलोक्यते ।

९—नाट्यनिर्देशस्याऽभावः सर्वत्र समानः संदृश्यते ।

१०—समेषामेषां नाटकानां नामानि केवलमन्त एव ग्रन्थस्य समुपलभ्यन्ते नान्यत्र क्वापि ।

प्रतिज्ञायौगन्धरायणम्' इत्याख्यस्य नाटकस्य नामकरणम्—रूपकस्यास्याऽभिधानकरणं यौगन्धरायणेन विहितां प्रतिश्रुतिं चेतसिकृत्यैव कृतं विद्यते । प्रस्तुतेऽस्मिन् नाटकेऽमात्यो यौगन्धरायणो वारद्वयं प्रतिज्ञां विदधाति । प्रथमा प्रतिज्ञा स तदा कुरुते यदा स निजप्रयासे विफलो भूत्वा स्वात्मनि नैराश्यमनुभवति । यतो हि यावत्पर्यन्त प्रद्योतवञ्चनाप्रकारं राज्ञे निवेदयितुं प्रयतते, तावद् भूपतिः वत्सराजः महासेनेन कारागारे निक्षिप्यते—

'यदि शत्रुबलग्रस्तो राहुणा चन्द्रमा इव ।
मोचयामि न राजानं नास्मि यौगन्धरायणः ॥ १।१६ ॥'

द्वितीया प्रतिश्रुतिः स भूपतेरुदयनस्य मनोरथसम्पूर्तये स्वामिभक्तिसंदर्शनाय च विदधाति—

'सुभद्रामिव गाण्डिवी नागः पद्मलतामिव ।
यदि तां न हरेद् राजा नास्मि यौगन्धरायणः ॥ ३।८ ॥
यदि तां चैव तं चैव तां चैवायतलोचनाम् ।
नाहरामि नृपं चैव नास्मि यौगन्धरायणः ॥' ३।९ ॥

इमे प्रतिश्रुतीमाधारीकृत्यैव नाटकस्यास्य नामकरणं कृतं विद्यते, यथा नाम्नैव सुस्पष्टं भवति ।

# कथासारः

वत्सदेशाधिपतिः भूपतिरुदयनो विद्यया विनयेन रूपेण वीर्येण चातीव-समन्वित आसीत्। तस्य सन्निकृष्टस्थो नरपतिः वृहतीभिश्चमूभिः संयुतेन हेतुना 'महासेन' इति नाम्ना प्रथितो बभूव। तस्यान्तिके परिणयार्हा वासवदत्ताऽऽख्या एका आत्मजा आसीत्। एतावता स तन्निमित्तं सुयोग्यवराऽन्वेषणे चिन्तितोऽभवत्। अत्रान्तर एव प्रद्योतो विज्ञातवान् यदुदयनो वारणस्य मृगयार्थं नागवनं प्रति प्रस्थितवान्। अस्माद्धेतोः स वत्सराजं प्रतारणार्थमेकां नीलकुवलयतनुं विनिर्माय परितः स्वभटान् नियोजयामास। वत्सराजो नीलवारणं यथार्थं मत्वा मृगयार्थं गतः, परं तत्र स प्रद्योतभटैः स्वायत्तीकृतः। संगृहीते वत्सराजे महासेनस्तस्योदयनस्य भृशं सत्कारं विधाय वासवदत्तायास्तमाचार्यं नियुक्तवान्। एवं कृते सति कतिचनानि दिनान्यतीत्य उभयोर्मध्ये स्नेहः सञ्जातः। एतत्सर्वमवगत्य उदयनस्यामात्यो यौगन्धरायणः स्वभूपतयेऽत्यर्थं चिन्ताऽन्वितोऽभूत्। स नैकविधैरुपायैः वत्सराजं कारागारान्मोचयित्वा वासवदत्तयोपेतं स्वस्वामिनं 'भद्रवती'ति नाम्ना प्रथितां हस्तिनीं समारोप्य अवन्तीदेशात् पलायितवान्। महासेनोऽपि तयोः परिणयसंस्कारः एकस्मिन् चित्रफलके विहितवान्। इत्थं वासवदत्तया सहितो वत्सराजः कौशाम्बीपुर्यां सुखेन निवासं कर्तुमारेभे।

प्रथमाऽङ्कस्य कथासारः— अस्मिन्नङ्के वत्सराजः कतिपयान् भटान् समादाय मृगयानिमित्तं नागवनं प्रति व्रजति। तत्रैकं कृत्रिमं नीलवारणं समवलोक्य वीणाद्वितीयेन साकं वत्सराजो गच्छति, परं तस्मिन्नवसरे स पराभवमनुभूय प्रद्योतभटैः संगृह्यते। यदा वत्सराजस्यामात्यो यौगन्धरायण इदं विजानाति यत् प्रद्योतोऽस्माकं स्वामिनं कृत्रिमनीलवारणच्छलेन प्रतारणाय यतते, तदा वत्सराजत्राणार्थं स सालकं तत्र संप्रेषयितुमभिलषति। परं एतदनन्तर एव हंसकः समागत्य वत्सराजग्रहणवृत्तान्तं यौगन्धरायणं प्रति विनिवेदयति। यौगन्धरायणश्चेमं वृत्तान्तं निशम्य शोकसंतप्तो भूत्वाऽशेषमिमं वृत्तान्तं राजमात्रे संसूचनाय प्रतिहारिणं समादिशति। वत्सराजग्रहणवृत्तान्तं प्रतीहारीमुखेन समाकर्ण्य राजमाता 'मत्पुत्रं मदन्तिकं समानय' इति स्वाभिप्रायं यौगन्धरायणं प्रति अभिव्यनक्ति। यौगन्धरायणोऽपि

राजानं मोचयितुं प्रतिज्ञां विदधाति। द्वैपायनो, व्यासस्तस्मै कतिपयान्येतादृशानि वसनानिप्रयच्छति, यानि परिधाय स यथेच्छमात्मानं गोपायित्वा शत्रुपुर्यां विहरेदिति शम्।

द्वितीयाऽङ्कस्य कथासारः—अस्मिन्नङ्के महासेनस्य राजधान्या उज्जयिनीपुर्याः वर्णनं चकास्ति। प्रद्योतस्य तनयया वासवदत्तया साकं परिणयार्थं मगध-काशी-बंग-मिथिलादेशप्रभृतीनामधिपतीनां निमन्त्रणानि समागतानि, परं 'सा कस्मै प्रदातव्या' इत्यस्य निर्णयं विधातुं स सक्षमो नाऽवलोक्यते। अस्मिन्नेव विचारविनिमयप्रसङ्गे रङ्गमञ्चे प्रद्योत-राजमहिषी-काञ्चुकीयानाञ्च संदर्शनं भवति। संलापावसरे सहसा काञ्चुकीयः वत्सराजग्रहणस्य वृत्तान्तं राज्ञे विनिवेदयति। पूर्वं प्रद्योतः वृत्तान्तञ्चामुं समाकर्ण्य न विश्वसिति, परं काञ्चुकीयेन पुनः पुनः समाश्वस्ते कृते सति स तथैव मनुते। प्रद्योतो वत्सराजं स्वभवनमध्ये समाह्वयति। राजमहिषी तादृशं सर्वगुणसम्पन्नमुदयनं समवलोक्य तं वासवदत्ताया अनुरूपं वरमङ्गीकरोति।

तृतीयाऽङ्कस्य कथासारः—अस्मिन्नङ्के प्रद्योतस्य राजधान्यां वत्सराजस्य विदूषको वेषपरिवर्तनं विधाय भ्रमन् संलक्ष्यते। वत्सराजस्य यौगन्धरायणाः गूढपुरुषाश्चापि वेषपरिवर्तनपुरस्सरं तत्रागताः सन्ति। यौगन्धरायण उन्मत्तकस्य, विदूषको डिण्डिकस्य, रुमण्वान् श्रमणकस्य च वेषं संधार्य वत्सराजं विमोचयितुं तत्पराः संदृश्यन्ते। यौगन्धरायणः प्रद्योतस्यानुचरान् प्रभूतं धनं प्रदाय स्वाधीनं विदधाति। स्वभटाञ्च नैकविधवेषसंधारणं कारयित्वाऽवन्तीदेशे संस्थापयति। एकस्मिन् स्थाने सम्मेल्य यौगन्धरायण-विदूषकौ च साङ्केतिकभाषायां परस्परं संलापं कुरुतः। रुमण्वानपि तत्र समागच्छति। अग्निभवनं संप्रविश्य ते राजानं मोचयितुं मिथः विचारं कुर्वन्ति। तस्मिन्नवसरे विदूषको यौगन्धरायणं प्रति निगदति यदस्माभिस्तं मोचयितुं सर्वमनुष्ठितम्, परं वत्सराजो वासवदत्तया साकं प्रयातुं स्वामिप्रायमभिव्यनक्ति। रुमण्वानपि तस्य समर्थनं विदधाति। एतत्सर्वं निशम्य यौगन्धरायणः प्रथमं राज्ञः कामुकतामेनामभिलक्ष्य हासं कुरुते, परं स्वामिनो-मनोरथस्यानुसरणं स्वकीयं कर्तव्यं मत्वा प्रतिश्रुतिमेकां करोति—

'सुभद्रामिव गाण्डिवी नागः पद्मलतामिव।
यदि तां न हरेद् राजा नास्मि यौगन्धरायणः॥
यदितां चैव तं चैव तां चैवायतलोचनाम्।
नाहरामि नृपं चैव नास्मि यौगन्धरायणः॥ ३। ८-९॥'

एतदनन्तरं सर्वे जनाः कालाधिक्यवशादितस्ततो व्रजन्ति।

चतुर्थाऽङ्कस्य कथासारः—अस्मिन्नङ्के यौगन्धरायणस्य चातुर्याद्उन्मत्तीकृतं नलागिरिवारणं स्वाधीनं विधातुं प्रद्योतेन वत्सराजो विमुच्यते। स समयस्य सदुपयोगं कुर्वन् वासवदत्तया साकं भद्रवतीति नाम्ना प्रथितां हस्तिनीं समारुह्य पलायते। अङ्कस्यादौ भद्रवतीत्याऽऽख्यायाः हस्तिन्याः संरक्षकं गात्रसेवकमन्विष्यन् भटः प्रविशति, यः याथातथ्येन वत्सराजस्य गूढपुरुषो विद्यते। गात्रसेवको मिथ्यारूपेण मद्यपस्याभिनयं विदधाति। स भटं प्रतिब्रूते यत् स हस्तिन्या अङ्कुशघण्टाप्रभृत्यशेषान् पदार्थान् बन्धकरूपेण शौण्डिकस्य भवने संस्थापितोऽस्ति। एतस्मिन्नवसर एव आरावः समेधते। तदैव वासवदत्तया सह वत्सराजस्य पलायनस्य वार्ताऽपि प्रसरति। पलायिते वत्सराजे प्रद्योतसेनया सार्द्धं यौगन्धरायणस्य रणो भवति, परमसिभङ्गेन हेतुना स रिपुचमूभिः निगृह्यते। प्रद्योतस्यामात्यो भरतरोहकः कारागारे यौगन्धरायणेन सम्मेल्यानया रीत्या वत्सराजपलायनस्य तीक्ष्णामालोचनां विदधाति। तदानीमेव भरतरोहको महासेनेन सम्प्रेषितं काञ्चुकीयेन समानीतं भृङ्गारं यौगन्धरायणाय दातुमभिलषति। यौगन्धरायणः प्रथमं स्वकीयमपमानं मत्वा तं नैवाङ्गीकरोति। परं यदा स जानाति यत् प्रद्योतो वत्सराजवासवदत्तयोः परिणयश्चित्रफलके कृतवानिति, तदा स तं भृङ्गारमुपायनं मत्वा सहर्षं स्वीकरोति। भरतवाक्येन साकं नाटकस्य पटाक्षेपो भवतीति शम्।

## पात्राणां चरित्रचित्रणम्

उदयनः—भरतान्वये प्रादुर्भूतो वत्सदेशाधिपतिरुदयनः कलाविदां प्रमुखं स्थानं धत्ते। विश्वविश्रुतः स रूपेण, गुणेन, विद्यया वपुषा च सर्वानतिशेते। अनेनैव हेतुना महासेनदयिता तं वासवदत्तानुरूपं मनुते।

भुवनप्रथितस्य तस्योदयनस्य वीणावादनचातुरी तु न केवलं सचेतसां जना-नामपि त्वुन्मत्तानां वारणानामपि चेतांसि प्रसभं हरतिस्म । गुणमेनमाश्रित्यैव स प्रद्योतेन प्रतार्यते कारागाराद्विमुच्यते च । स वासवदत्तां वीणां शिक्षयितुमाचार्यरूपेण नियुक्तोऽस्ति । वत्सराजः धैर्ये पराक्रमेऽपि प्रशंसनीयो विद्यते, यतो हि यदा स कृत्रिमवारणग्रहणप्रसङ्गे प्रद्योतस्य महतीं पृतनां पश्यति, तदा स धैर्यात् मनागपि न विचलति, परं स्वकीयामल्पीयनिमनीकिनीं समादाय रणाय प्रयतते, न, त्वात्मसमर्पणाय । एकाकी एव स नैकान् भटान् यमालयं संप्रेष्य धैर्यस्य पराक्रमस्य च पराकाष्ठां द्योतयति । प्रद्योतेन कारागारे निक्षिप्तेऽपि स मनसा स्वतन्त्रोऽस्ति । नृपोचितेन सम्मानेन समयं यापयन् वासवदत्तया साकं स्वपुरीं प्रति प्रस्थातुं स दृढप्रतिज्ञः संलक्ष्यते । अयमेव हेतुः यत्केवलमात्मानं मोचयितुं यौगन्धरायणस्य परामर्शं स नाङ्गीकरोति । अवसाने स स्वकीयेनाऽऽत्मविश्वासेन यौगन्धरायणस्य बुद्धिचातुर्येण च वासवदत्तापहरणे सफलो भवतीति शम् ।

यौगन्धरायणः—सचिववृन्देषु प्रामुख्यं भजन्नयमुदयनस्य प्रधानामात्यरूपेण राजते । स्वामिभक्तेः नीतिपाटवस्य बुद्धिमत्तायाश्च मूर्तिमान् विग्रह इवायं संदृश्यते । अस्य बुद्धिवैशद्यमभिलक्ष्यैव निगृहीतेऽपि वत्सराजो विलासपूर्णं जीवनं गमयति । उदयनो विश्वसिति यत् यावद् यौगन्धरायणो विद्यते, तावत् कश्चिदपि जनस्तस्य किमप्यनीष्टं कर्तुं न शक्नोति । यौगन्धरायणोऽपि तदनुरूपं कार्यं विदधाति । कलाविदः विलासिनो भूपतेरुदयनस्य स एवंविधं संरक्षणं विहितवान् यन्निगृहीतेऽपि केनापि किमप्यप्रियं तस्य न कृतमिति यौगन्धरायणस्य सफलतायाः निदर्शनम् । यद्यपि पूरा स साफल्यं न लभते, यतोहि यावत् स राजानं संसूचयितुं यतते, तावदुदयनः प्रद्योतपृतनया निगृह्यते । किन्तु यौगन्धरायणोऽस्याऽपमानस्यैतादृशः प्रतीकारः कुरुते, यत् रिपूणाममात्यानामुत्तमाङ्गं सर्वकालायाधो भवति । यौगन्धरायणः स्वस्मिन् प्रभूतमात्मविश्वासं निदधाति । अयमेव हेतुः यत् स एवंविधां प्रतिश्रुतिं कुरुते—

'यदि शत्रुबलग्रस्तो राहुणा चन्द्रमा इव ।

मोचयामि न राजानं नास्मि यौगन्धरायणः ॥ १।१६ ॥

अन्यच्च—

सुभद्रामिव गाण्डिवी नागः पद्मलतामिव ।
यदि तां न हरेद् राजा नास्मि यौगन्धरायणः ॥
यदि तां चैव तं चैव तां चैवायतलोचनाम् ।
नाहरमि नृपं चैव नास्मि यौगन्धरायणः ॥ ३।८-९ ॥'

ईदृशी प्रतिज्ञा आत्मविश्वासस्य पराकाष्ठां द्योतयति । वासवदत्ताया अपहरणमपि सुदुष्करं कार्यं विद्यते, परं यौगन्धरायणस्तस्मिन्नपि स्वबुद्धिवैशद्येन साफल्यमधिगच्छति । नीतिज्ञेषु वरेण्यः स स्वकीयान् गूढपुरुषानशेषे उज्जयिनीदेशे विनियुज्य प्रद्योतस्याशेषं कार्यजातमवगच्छति । कारागाराद् वत्सराजं विमोचयितुं स्वकीयं जीवनमप्यविगणय्य स्वामिभक्तेरुदाहरणं प्रस्तौति । अनेन प्रकारेण समासेन वयं वक्तुं शक्नुमो यन्नाटकेऽस्मिन् बुद्धिमत्तायाः स्वामिभक्तेः नीतिचातुर्यस्य च धृतविग्रह इव यौगन्धरायणः संलक्ष्यते ।

प्रद्योतः—उज्जयिनीनरेशः प्रद्योतः स्वपराक्रमस्य पृतनायाश्चाधिक्यवशात् 'महासेन' इति नाम्ना प्रथितोऽस्ति । प्रभूतशक्तिसम्पन्नस्य प्रद्योतस्याऽऽधिपत्यमुदयनो नाऽङ्गीकुरुते, एतावता स चेतसि शोकमावहति । यथा—

'अग्निः कक्ष इवोत्सृष्टो दहत् कार्त्स्न्येन मेदिनीम् ।
अस्य मे शासनं दीप्तं विषयान्तेऽवसीदति ॥ २।११ ॥'

वार्तालापप्रसङ्गे स्वदयितां प्रति वत्सराजगुणवर्णनादेतस्य परेषां गुणग्रहणानुरागोऽनुमीयते । 'वासवदत्तायाः कृतेऽनुरूपे वरे सत्यप्यस्मिन् दर्पो विघ्नः' इति प्रद्योतस्याङ्गीकरणादस्य गुणग्राहकता सुस्पष्टा भवति । निगृहीते वत्सराजे 'अनेन साकं राजकुमार इव व्यवहर्तव्यः' इति प्रद्योतस्यादेशप्रदानेन तस्यौदार्यं दृग्गोचरी भवति । अत्रैव वत्सराजं प्रति तस्यानुरागोऽपि परिलक्ष्यते, येनेदं प्रतीयते यत् तस्याशेषे मधुरो व्यवहारः 'वासवदत्तया साकमुदयनस्य परिणयो भवेदित्येतत्कार्यं सम्पूर्त्यै विद्यते । अयमेव हेतुः यत् प्रद्योतः वीणां शिक्षयितुं वासवदत्तां तस्योदयनस्यान्तिकं सम्प्रेषयति । स चारुतया विजानाति यदुभयोर्वयः समान एवास्ति । रहसि तयोः सम्मेलनं

कामप्यन्यां कथामुद्भावयितुं शक्नोति। परमेतत्सर्वं विज्ञायापि स तथैवाचरति। यदा वासवदत्तां नीत्वा वत्सराजः पलायते, तदा स चित्रफलके तयोर्दरिणयं विधाय स्वकीयमनुमोदनं विदधाति। इत्थं समासेन निगदितुं शक्यते यन्महासेनो धैर्यसमन्वितः प्रसन्नवदनः उदारगुणसम्पन्नश्चास्ति।

वसन्तकः—नाटकस्यास्य विदूषकस्यापि महत्त्वं स्वल्पं नास्ति। स 'वसन्तक' इति नाम्ना प्रथितिं लभते। भारतीयनाट्यशास्त्रदृशा विदूषकः विप्रवंशे जनिर्लब्ध्वा जनसमुदायस्य कृते हासरसस्य स्रोतस्विनीं प्रवाहयति। अस्याभिधानं प्रायः ऋतोः पुष्पस्य वा पर्यायवाचित्वं भजते। वयसा स नायकेन लघु भवति। विग्रहनिर्माणमस्य दर्शकाणां कृते हासोत्पादकं भवति। एवंविधो विदूषकः स्वभाषया, कार्येण वेश-भूषया च जनान् हासयति। द्वयोर्मध्ये कलहं कारयित्वा स मोदते नायिकया साकं नायकसम्मेलनेऽयमतीव पटीयान् भवति। चारित्रिकदार्ढ्येनायमात्मानं कस्या अपि वनितायाः प्रेम्णि न बध्नाति। परेषां मनोविनोदेऽयं सुष्ठु विदधाति, परं स्वयं जातुचित् हासं नैव कुरुते। प्रेक्षणे मूढोऽयं विदूषक आन्तरिकदृष्ट्या निपुणो भवति। भक्षणस्य पानस्य च वार्तायामयं स्वकीयं रागमभिव्यनक्ति। अयं श्रद्धया भक्त्या प्रेम्णा चः स्वामिनं सेवते।

रुमण्वान्—प्रत्युत्पन्नमतिसम्पन्नोऽयं रुमण्वान् यौगन्धरायणमतेऽतीवचतुरो विद्यते। विपदि स स्वकीयां धिषणां न जहाति। विजने कानने कस्याप्यपरिचितजनस्य मुखात् नीलवारणस्य सूचनां समासाद्य वत्सराजो विश्वसिति, परं रुमण्वान् शंकते। एतावता स स्वकीयं संशयमपि राजानं प्रति अभिव्यनक्ति। स्वामिनं प्रति निष्ठायुतोऽयं जनः कारागाराद् राजानं मोचयितुं यथाशक्ति प्रयतते। यौगन्धरायणोऽपि अस्य प्रशंसां विदधाति।

पुस्तकस्यास्य प्रणयनावसरे सत्परामर्शदानाय सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये कार्यरताय श्रीवल्लभदासशाह महोदयाय, प्रकाशनभारमङ्गीकृताय चौखम्बा अमरभारती प्रकाशनाध्यक्षाय श्रीसुन्दरदासजी गुप्त महोदयाय, तथैव कार्यनिरतेभ्यः श्रीयमुनादास, श्रीदामोदरदास, श्रीहरेकान्तमिश्र प्रभृतिमहोदयेभ्यः शतशः साधुवादान् वितरामि। अन्ते च नैक-

विद्यसाहाय्यप्रप्रदानार्थं श्रीनागेशपतित्रिपाठिमहोदयाय कृतज्ञताज्ञापनपुरस्सरं शुभाशिषा संयुनज्मि । पुनश्च —

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत् ॥

इति स्वकीयामीहां जगन्नियन्तुः पादपङ्कजेषु समर्प्य पौनः पुन्येन प्रणतिपुरस्सरं विरमामीतिशम् ।

रामनवमी, वि० सं० २०४९
सी० के० ६४।३६ ए,
हीरापुरा,
जालपादेवी रोड,
वाराणसी

विदुषामाश्रवः—
डा० रमाशंकर मिश्रः

# भूमिका

## भास का समय

संस्कृत वाङ्मय के अन्य प्रसिद्ध नाटककारों एवं महाकवियों की भांति विद्वन्मूर्धन्य महाकवि भास का समय भी विवादास्पद रहा है। अनेक संस्कृत काव्यों और नाटकों में उनका सम्मानपूर्वक नामोल्लेख देखकर केवल यहीं ज्ञात होता था कि प्राचीनकाल में भास नामक कोई प्रसिद्ध नाटककार हुए थे। उनके काव्यग्रन्थ कभी प्राप्त होंगे, ऐसी आशा किसी को नहीं थी। परन्तु १९१२ ई० ट्रावनकोर के महामहोपाध्याय टी० गणपति शास्त्री जी इनके तेरह नाटकों का अन्वेषण कर संस्कृत साहित्य में एक अभिनव चेतना जागृत कर दी। यह महाकवि कब और कहाँ उत्पन्न हुए, यह आज भी अनिश्चय के गर्भ में है। संस्कृत भाग में दर्शाये गये अनेक प्रमाणों के आधार पर संक्षेप रूप से हम यह कह सकते हैं कि ई० पू० चतुर्थ शतक से लेकर ई० द्वितीय शतक तक के मध्य तक भास कभी उत्पन्न हुए थे।

बहुत से विद्वान् श्री गणपति शास्त्री जी द्वारा प्रकाश में लाये गये नाटकों को ही प्राचीन भास कृति मानते हैं और उसके पुष्टि में अनेक प्रमाण भी उपस्थित करते हैं। किन्तु विविध अनुसन्धानों से यह पता चलता है कि इन नाटकों के प्रणेता प्राचीन भास नहीं हैं। क्योंकि उदाहरण के रूप में दिखाये गये भास रचित अनेक पद्य इन नाटकों में उपलब्ध नहीं होते हैं। इसलिये ये सभी नाटक करल प्रदेश में समुत्पन्न किसी नवीन कवि द्वारा बनाये गये हैं, ऐसा हम कह सकते हैं। महामहोपाध्याय रामावतार शर्मा भी उपलब्धरूपकों के अंश विशेष ही भास द्वारा रचे गये है, ऐसा स्वीकार करते हैं। इस परिस्थिति में समुचित यह प्रतीत होता है कि हम दो भास की कल्पना करें। उनमें से एक प्राचीन भास महाकवि कालिदास आदि का पथ प्रदर्शक था और दूसरा भास केरल प्रदेश के अन्तर्गत द्वादशशताब्दी में समुत्पन्न हुआ था। जिसके चौदह नाटक महा-महोपाध्याय गणपति शास्त्री जी द्वारा प्रकाश में लाये गये।

## भास का निवास स्थान

कुछ विद्वान् भास को दक्षिण का मानते हैं, परन्तु वे आर्यावर्त के जान पड़ते हैं। क्योंकि उनके पात्र दक्षिण के नहीं, अपितु आर्यावर्त के हैं। जैसा कि स्वप्नवासवदत्तम् और बालचरित के भरत वाक्य पर विचार करने से ज्ञात होता है—

'इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम्।
महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः॥'

अर्थात् जिस पृथ्वी रूपी नायिका के दोनों कानों में हिमालय और विन्ध्याचल दो कुण्डलों के समान सुशोभित हैं, हमारे महाराज उस ससागरा पृथ्वी के एकच्छत्र स्वामी हों। यहाँ विचारणीय यह है कि इस श्लोक में हिमालय और विन्ध्याचल को भगवती वसुन्धरा के कर्ण कुण्डलों के सदृश बतलाया गया है। भास ने दाहिना कान विन्ध्य और बाँया कान हिमालय को माना है। उनकी पृथ्वी पूर्व से पश्चिम तक फैली हुई है। भास की पृथ्वी उत्तर में हिमालय और दक्षिण में विन्ध्य तक है। इससे अनुमान किया जाता है कि इस सीमा के भीतर ही कहीं उनका निवास स्थान था।

## महाकवि भास का वैशिष्ट्य

महाकवि भासकी शैली अद्वितीय है। भाव और विचार उच्च एवं हृदयग्राही हैं। भाषा अतीव सरल, सरस, मधुर और चित्ताकर्षक है। विभिन्न अवस्था में विभिन्न भावों और विषयों के सूक्ष्म वर्णन में भास सिद्ध-हस्त हैं। उनकी रचना में कहीं भी अस्वाभाविकता और कृत्रिमता प्राप्त नहीं होती है। भाव, भाषा, माधुर्य, प्रसादगुण, चरित्र-चित्रण, कथोपकथन और कवित्वकी दृष्टि से महाकवि भास की रचना में संस्कृत-साहित्य के किसी भी श्रेष्ठ कवि अथवा नाटककार से पीछे नहीं है। उनके नाटक रंगमंच पर मंचन करने योग्य हैं। उनका कथोपकथन स्वाभाविक और उनके पात्र अत्यन्त सजीव हैं।

बहुत से कवियों की रचनाओं में इनकी रचनाओं का सादृश्य दिखाई पड़ता है। शूद्रक, कालिदास और भवभूति की रचनाओं से इसकी अधिकता है। महाकवि कालिदास रचित अभिज्ञानशाकुन्तल और भास प्रणीत

अभिषेक नाटक के कुछ स्थल पर पर्याप्त समानता है। जैसे अभिषेक नाटक के चौथे अंक में—

'यस्यां न प्रियमण्डनापि महिषी देवस्य मन्दोदरी
स्नेहाल्लुम्पति पल्लवान्न च पुनर्वीजन्ति यस्यां भयात्।
वीजन्तो मलयानिला अपि करैरस्पृष्टबालद्रुमा
सेयं शक्ररिपोरशोकवनिका भग्नेति विज्ञाप्यताम् ॥'

इसी आशय का श्लोक अभिज्ञान शाकुन्तल के चतुर्थ अंक में देखिये—

'पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्।
आद्ये वः कुसुमप्रसूतिसमये यस्याः भवत्युत्सवः
सेयं याति शकुन्तलापतिगृहं सर्वैरनुज्ञायताम् ॥'

इसी तरह बालचरित के प्रथम अंक में देवकी के हालत ( वसुदेव के हाथ कृष्ण को सौंपते समय ) का वर्णन—

'हृदयेनैव तत्रार्द्धं द्विधाभूतेन गच्छति।
यथा नभसि तोये च चन्द्रलेखा द्विधाकृता ॥'

इसी तरह शाकुन्तल के प्रथम अंक में—

'गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥'

इसी प्रकार उत्तररामचरित के दूसरे अंक का आत्रेयी संवाद स्वप्न-वासवदत्ता के प्रथम अंक के विद्याधरसंवाद की छाया है।

महाकवि भास अन्तर्जगत तथा बहिर्जगत के व्यापारों को चित्रण करने में अद्वितीय हैं। वे तपोवन का वर्णन कितनी सुन्दरता से करते हैं। पाठकगण स्वयं देखें—

'विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्यया
वृक्षाः पुष्पफलैः समृद्धविषयाः सर्वे दयारक्षिताः।
भूयिष्ठं कपिलानि गोकुलधनान्यक्षेत्रवत्यो दिशः
निःसन्दिग्धमिदं तपोवनमयं धूमो हि बह्वाश्रयः ॥'

अन्यच्च—

'खगावासोपेताः सलिलमवगाढो मुनिजनः
प्रदीप्तोऽग्निर्भाति प्रविचरति धूमो मुनिवनम् ।
परिभ्रष्टो दूराद्रविरपि च संक्षिप्तकिरणो
रथं व्यावृत्यासौ प्रविशति शनैरस्तशिखरम् ॥'

महाकवि भास का हृदय विशाल तथा कोमल था। उसने रमणी मानसतल में कितनी गहरी डुबकी लगाई थी इसका पता उनके नाटकों से चलता है। प्रस्तुत पुस्तक यौगन्धरायण में वासवदत्ता के वर के विषय में राजा को जो चिन्ता होती है उसका वर्णन कवि ने जिस प्रकार से किया है उससे पता चलता है कि भास मानवीय प्रकृति के वर्णन में कितने कुशल थे। यथा—

'कुलं तावच्छ्लाघ्यं प्रथममभिकाङ्क्षे हि मनसा
ततः सानुक्रोशं मृदुरपि गुणो ह्येष बलवान् ।
ततो रूपे कान्तिं न खलु गुणतः स्त्रीजनभयात्
ततो वीर्योदग्रं नहि न परिपाल्या युवतयः ॥ १ ॥

कन्यायाः वरसम्पत्तिः पितुः प्रायः प्रयत्नतः ।
भाग्येषु शेषमायत्तं दृष्टपूर्वं न चान्यथा ॥ २ ॥

अदत्ते त्यागता लज्जा दत्तेति व्यथितं मनः ।
धर्मस्नेहान्तरे न्यस्ता दुःखिताः खलु मातरः ॥ ३ ॥

वत्सराज जब प्रद्योत के सामने पकड़कर लाया गया तब महासेन की जो भावना उसके प्रति हो गई थी, उसका कवि ने बड़ी ही उत्तम रीति से वर्णन किया है—

'पूर्वं तावद् वैरमस्यावलेपादानीतेऽस्मिन् स्यात् तु मध्यस्थता मे ।
युद्धक्लिष्टं संशयस्थं विपन्नं श्रुत्वा त्वेनं संशयं चिन्तयामि ॥'

स्वामी के प्रति भृत्य की स्वामीभक्ति किस प्रकार की होनी चाहिये, इसका सुन्दर निदर्शन हंसक और यौगन्धरायण के वार्तालाप में मिलता है।

दुःख में पड़े हुए लोगों की रात्रिकष्टप्रद होती हैं। रात बीतने पर दुःखी पुरुष इस बात की चिन्ता करता है कि अब दिन कैसे बीतेगा। इन बातों को कवि ने तृतीय अङ्क में बड़ी उत्तम रीति से वर्णन किया है—

यौगन्धरायणः—अतिक्रान्तयोगक्षेमा रात्रिः दिवस इदानीं प्रतिः पाल्यते ।

अहः समुत्तीर्य निशा प्रतीक्ष्यते शुभे प्रभाते दिवसोऽनुचिन्त्यते ।
अनागतार्थान्यशुभानि पश्यतां गतं गतं कालमवेक्ष्य निर्वृतिः ।।'

रुमण्वान्—सम्यग् भवानाह । तुल्येऽपि कालविशेषे निशेव बहुदोषा बंधनेषु ।

भास के अनेक गुणों का वर्णन करना असम्भव हैं। अतः इतने पर ही इस विषय का अवसान किया जाता हैं।

## भास के नाटकों का संक्षिप्त परिचय

महामहोपाध्याय गणपति शास्त्री जी ने महाकवि भास के जिन तेरह नाटकों का अन्वेषण किया है, वे निम्नांकित हैं—

१—स्वप्नवासवदत्तम् , २—प्रतिज्ञायौगन्धरायणम् , ३—पंचरात्रम् , ४—चारुदत्तम् , ५—दूतघटोत्कचम् , ६—अविमारकम् , ७—बालचरितम् , ८—मध्यमव्यायोगः, ९—कर्णभारम् , १०—उरुभङ्गम् , ११—अभिषेकनाटकम् , १२—प्रतिमानाटकम् , १३—दूतवाक्यम् । इसके अतिरिक्त गोण्डलनिवासी राजवैद्य जीवराम कालिदास महोदय ने १९४१ में 'यज्ञफलम्' नामक नाटक प्रकाशित कराया । उसे भी भासकृति के रूप में जाना जाता है ।

१—स्वप्नवासवदत्तम्—महाकवि भास की सभी रचनाओं में यह सर्वोत्तम रचना है । इसे 'प्रतिज्ञायौगन्धरायण' का उत्तरार्ध भी समझा जा सकता है । इस नाटक में राजा उदयन का वासवदत्ता के साथ स्वप्न में सम्मिलन होता है । इसी आधार पर इस नाटक का नाम 'स्वप्नवासवदत्तम्' रखा गया है । कौशाम्बी का राजा उदयन अपनी प्रिया वासवदत्ता में अत्यन्त आसक्त हो जाने के कारण राजकार्य से विमुख हो जाता है। ऐसी स्थिति में उसके शत्रु प्रबल होकर राज्य पर अधिकार कर लेते हैं। इस हालत में अपनी स्थिति सुदृढ़ करने और शत्रुओं को परास्त करने हेतु मगधराज दर्शक की सहायता लेना अत्यावश्यक हो जाता है। इसलिये

उसका मन्त्री यौगन्धरायण ( वासवदत्ता की अनुमति से ) वासवदत्ता के लावणक वन में जल जाने की बात प्रसारित कराकर गुप्त वेश में वासवदत्ता को मगधराज दर्शक की भगिनी पद्मावती के पास रख देता है। वासवदत्ता को पद्मावती के समीप रखने का कारण यह था कि दैवज्ञों ने भविष्यवाणो की थी कि उदयन का दूसरा विवाह पद्मावती से होगा । इस प्रकार यौगन्धरायण की चालाकी से उदयन का शुभ विवाह पद्मावती से सम्पन्न हो जाता है। बाद में वत्सराज वासवदत्ता को स्वप्न में देखता है और आगे चलकर यह स्वप्न यथार्थ में परिणत हो जाता है। इस प्रकार इस नाटक का सुखावसान होता है । उसमें प्रेम का बड़ा ही मनोरम चित्रण किया गया है।

२—प्रतिज्ञायौगन्धरायणम्—इस नाटक में भी वत्सराज की ही कथा वर्णित हैं। इसे हम 'स्वप्नवासवदत्तम्' का पूर्वार्द्ध कह सकते हैं। इसमें उदयन कृत्रिक गज के छल से अवन्तिराज प्रद्योत के द्वारा बन्दी बना लिया जाता है। वहाँ पर प्रद्योत की पुत्री वासवदत्ता को वीणा की शिक्षा देने लगता है। कालान्तर में वत्सराज और वासवदत्ता में प्रेम हो जाता है। इस पर मन्त्री यौगन्धरायण वत्सराज और वासवदत्ता का अपहरण करने की प्रतिज्ञा करता है और उसमें सफल भी हो जाता है। इसी आधार पर इस नाटक का नाम 'प्रतिज्ञायौगन्धरायण' रखा गया है।

३—पंचरात्रम्—इस रूपक में महाकवि भास ने महाभारत की एक कथा को अपनी कल्पना शक्ति के आधार पर बड़ा अनूठा चित्रण किया है। दुर्योधन यज्ञ में अपने गुरु द्रोणाचार्य को मनोवाञ्छित दक्षिणा देने के निमित्त तैयार हो जाता है। इसपर द्रोणाचार्य पाण्डवों के निमित्त आधा राज्य देने को उससे कहते हैं। ऐसी स्थिति में दुर्योधन शकुनि की सलाह पर इस शर्त के साथ कि पाँच रात्रियों के अन्दर यदि पाण्डवों का पता चल जायगा तो उन्हें आधा राज्य दे देगा, अपनी स्वीकृति प्रदान कर देता है। द्रोणाचार्य भी इस शर्त को स्वीकार कर लेते हैं। बाद में द्रोणाचार्य के प्रयास से विराट नगर में निवास करते हुए पाण्डवों का पता चल जाता है। इस स्थिति में दुर्योधन अपनी प्रतिज्ञा को स्मरण करते हुए

पाण्डवों को आधा राज्य दे देता है। यह कथा महाभारत की कथा से मेल न खाने के कारण कविप्रतिभा की उपज प्रतीत होती है।

४—चारुदत्तम्—इस नाटक में ऐश्वर्यविहीन पर चरित्र गुणसम्पन्न विप्र चारुदत्त और गुणग्राहिणी गणिका वसन्तसेना की प्रेमकथा मनोरम ढंग से वर्णित है।

५—दूतघटोत्कचम्—इस रूपक में अभिमन्यु के मरने से शोकसंतप्त और कुपित अर्जुन की प्रतिज्ञा के अनन्तर पाण्डवों के पक्ष से घटोत्कच दूत बनकर दुर्योधन के पास उसके विनाश के सूचना देने हेतु जाता है। इसमें घटोत्कच और दुर्योधन के वार्तालाप का बड़ा ही मनोरम चित्रण है।

६—अविमारकम्—इस नाटक में सौवीर राजा के पुत्र विष्णुसेन जो अविमारक के नाम से विख्यात था और राजा कुन्तिभोज की पुत्री कुरङ्गी की प्रणय कथा वर्णित है। विष्णुसेन ने भेड़रूपधारी 'अवि' नामक राक्षस को मारा था। अतः इस नाटक का नाम भी अविमारक रखा गया है।

७—बालचरितम्—इस नाटक में भगवान श्रीकृष्ण की कथा जन्म से लेकर कंसवधपर्यन्त वर्णित है। इसमें कृष्ण के बालचरित का बहुत ही सजीव वर्णन किया गया है।

८—मध्यमव्यायोगः—इस रूपक में पाण्डवों के बनवास के समय घटोत्कच के हाथों से मध्यमपाण्डव भीम द्वारा मध्यमक्षिप्रबालक की सुरक्षा की कथा वर्णित है।

९—कर्णभारम्—इस नाटक में कर्ण का उदात्त चरित्र वर्णित है। इसमें कर्ण याचक इन्द्र को अपना कवच और कुण्डल भी दान कर देता है।

१०—उरुभङ्गम्—इस रूपक में भीम और दुर्योधन के गदायुद्ध तथा दुर्योधन के ऊरुभंग की कथा वर्णित है।

११—अभिषेकनाटकम्—छः अङ्कों के इस रूपक में किष्किन्धाकाण्ड, सुन्दरकाण्ड, लंकाकाण्ड तथा राम के राज्याभिषेकपर्यन्त की कथा मनोरम ढंग से वर्णित है। उसी राज्याभिषेक की कथा वर्णित होने के कारण ही इस नाटक का नाम 'अभिषेकनाटकम्' पड़ा है।



१२—प्रतिमानाटकम्—इस नाटक में रामवनगमन, सीताहरण

आदि अयोध्याकाण्ड से प्रारम्भ कर रावणवधपर्यन्त की कथा वर्णित है। इसमें भरतप्रणीत नाट्यशास्त्र नियम के विरुद्ध दशरथ की मृत्यु रंगमंच पर ही अभिनीत की गई है। अतीतकाल में भारतीय राजाओं के देवकुल होते थे, जिनमें मृत्यु के बाद नरेशों की प्रस्तर मूर्तियाँ रखी जाती थीं। इक्ष्वाकुवंश के राजाओं का भी देवकुल था, जिसमें स्वर्गलोक में प्रस्थित राजाओं की मूर्तियाँ रखी जाती थीं। राजा दशरथ की भी मूर्ति देवकुल में रखी गई थी, जिसे अपने मामा के घर से लौटते समय भारत देखकर उनकी मृत्यु का अनुमान कर लेते हैं। इसी के आधार पर इस नाटक का नाम 'प्रतिमानाटक' रखा गया है।

१३—दूतवाक्यम्—इस रूपक में महाभारत के युद्ध के पहले भगवान् श्रीकृष्ण के पाण्डवों के दूत बनकर कौरवों के पास जाने की कथा वर्णित है। कृष्ण और दुर्योधन के कथोपकथन का सुन्दर वर्णन इसमें समुपलब्ध होता है।

१४—यज्ञफलम्—इस नाटक में युधिष्ठिर के यज्ञ सम्बन्धी कथा संक्षिप्त रूप से वर्णित हैं।

इन नाटकों के विषय में लोगों का कहना है कि इन नाटकों में किसी कवि का नाम नहीं है, अतः यह कहना कि वे सब भास के ही हैं, ठीक न होगा। किन्तु इन बातों का समाधान करने के लिये श्री गणपति शास्त्री जी ने कई युक्तियाँ उपस्थित की हैं। उन्होंने बताया है कि नाटकों की कुछ विशेषताओं तथा उनके रचना सादृश्य, भाषा-विन्यास इत्यादि पर विचार करने से पता चलता है कि उन सबका रचयिता एक ही कवि है। शास्त्री जी ने तो युक्तियाँ पेश की हैं उनका सार निम्नांकित है—

(१) इन सब नाटकों के आरम्भ में 'नान्द्यन्ते ततः प्रविशति सूत्रधारः' का उल्लेख है और उसके अनन्तर मंगल श्लोक है।

(२) इन सब में 'प्रस्तावना' के स्थान पर 'स्थापना' लिखा हुआ है।

(३) दूसरे कवियों के समान कहीं भी इस कवि ने अपने अथवा दूसरे के नाम, ग्रन्थ अथवा किसी की प्रशंसा का उल्लेख नहीं किया है।

(४) हर नाटक के भरत वाक्य में 'इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः' आया है। यथा—

इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम् ।
महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः ॥ ( स्वप्नवासवदत्ता )
भवन्त्वरजसो गावः परचक्रं प्रशाम्यतु ।
इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः ॥ ( प्रतिज्ञायौ० )

(५) प्रत्येक नाटक के अन्त में नाम और समाप्ति की घोषणा पूरे वाक्य से दी गई है।

(६) मंगल-श्लोक से आने के तीन वाक्य प्रायः एक से हैं।

(७) बहुत से नाटकों में मुद्रालङ्कार के व्याज से प्रधान पात्रों के नाम सूचित कर दिये गये हैं। दूसरों में किसी प्रधान पात्र के नाम का संकेत हैं। इनमें पात्रों की बहुलता है। यथा—

उदयनवेन्दुसवर्णावासवदत्ताबलौ बलस्य त्वाम् ।
पद्मावतीर्णपूर्णौ वसन्तकम्रौ भुजौ पाताम् ॥ ( स्वप्न० )

यहाँ उदयन, पद्मावती, वसन्तक और वासवदत्ता आदि पात्रों का नाम इङ्गित है।

पातु वासवदत्तायो महासेनोऽतिवीर्यवान् ।
वत्सराजस्तु नाम्ना सशक्तियौगन्धरायणः ॥ ( प्रतिज्ञायौग० )

इसमें वासवदत्ता और यौगन्धरायण आदि पात्रों का नाम संकेतित है।

(८) इनमें कहीं-कहीं समान भाव, कहीं-कहीं समान पद और कोई-कोई श्लोक तो जैसे के तैसे मिलते हैं।

इन सब बातों से यही सिद्ध होता है कि इन सब नाटकों का रचयिता एक ही व्यक्ति रहा होगा और वह व्यक्ति भास के अतिरिक्त कोई दूसरा नहीं है।

## पात्रों का चरित्र-चित्रण

उदयन—प्रस्तुत नाटक में उदयन वत्सदेश का अधिपति और कलाकारों का शिरमौर है। वह अत्यन्त सौन्दर्यशाली एवं गुणी है। उसका जन्म प्रख्यात भरतवंश में हुआ है। वह वीणावादन और शिकार की कला में अद्वितीय है। इस प्रकार हम देखते हैं कि जन्म, धन, रूप और गुणों का एकत्रीकरण उदयन में है। यही कारण है कि महासेन की राजमहिषी उसी

को वासवदत्ता के योग्य अङ्गीकार करती है। वह गम्भीर और धीरोदात्त नायक है। वह अपनी प्रियतमा वासवदत्ता के विनाश को सुनकर व्यग्र तो होता है, पर धैर्य का परित्याग नहीं करता। इसकी तुलना में हर्ष द्वारा वर्णित रत्नावली और प्रियदर्शिका का उदयन सर्वथा तटस्थ, कान्तिहीन और आकर्षणविहीन पात्र है। नाटिका के लिये उसे धीरललित सिद्ध कर कवि ने उसके उज्ज्वल व्यक्तित्व की अपकृष्टता ही दिखलाई है। इसके विपरीत भास का उदयन आत्मविश्वास से भरपूर धैर्य और पराक्रम में भी श्लाघनीय है। वह कृत्रिम हाथी को पकड़ने के प्रयास में प्रद्योत की महती सेना को देखकर जरा-सा भी विचलित नहीं होता। वह अपनी छोटी-सी सेना लेकर युद्ध करता है न कि आत्मसमर्पण। वह महासेन द्वारा बन्दी होकर भी मन से बन्दी नहीं होता। अब विदूषक यौगन्धरायण के सारे प्रबन्ध को जो उसे मुक्त करने के लिये किये गये हैं, सुनाता है तो वह कहता है कि 'मैं तो वासवदत्ता को लेकर ही जाऊँगा'। अन्ततोगत्वा वह अपने आत्मविश्वास और यौगन्धरायण के बुद्धिचातुर्य से उसमें सफल भी हो जाता है।

यौगन्धरायण—यौगन्धरायण वत्सराज उदयन का प्रधान अमात्य है। वह बुद्धिमत्ता, स्वामिभक्ति तथा नीति-कुशलता का मूर्तिमान रूप है। वह अपने बुद्धि-चातुर्य से उदयन के खोये हुए साम्राज्य को पुनः प्राप्त कर लेता है। वह वत्सनरेश के सुख-दुःख में साथ देते हुए उसके सर्वविध अभ्युदय एवं कल्याण की कामना करता है। गुणों का आगार होने पर भी उसके मानस-पटल पर अभिमान एवं अनुचित हठवादिता का अभाव है। यौगन्धरायण आत्म-विश्वास का अनुपम निदर्शन है। यही कारण है कि उदयन के बन्दी होने पर वह प्रतिज्ञा करता है कि यदि मैं उदयन को मुक्त न किया तो मेरा नाम यौगन्धरायण नहीं।' प्रद्योत के संरक्षण से वासवदत्ता सहित वत्सराज को भगाना कोई साधारण कार्य नहीं। फिर भी वह आत्मविश्वास के कारण सफल हो जाता है। नीतिज्ञता और स्वामिभक्ति उसमें कूट कूट-कर भरी हुई है संक्षेप में हम यह कह सकते हैं कि प्रस्तुत नाटिका में महाकवि भास ने इसे एक आदर्श मन्त्री के रूप में चित्रित किया है।

प्रद्योत—उज्जयिनी का नरेश प्रद्योत एक शक्तिशाली एवं प्रभावोत्पा-

दक व्यक्तित्व का राजा है। उनके पराक्रम की सूचना उनकी उपाधि 'महासेन' ही देती है। इनका सर्वत्र आधिपत्य है, फिर भी इन्हे सन्तोष नहीं होता। क्योंकि वत्सराज उदयन अपने को उससे तटस्थ और स्वतन्त्र समझते हैं। यद्यपि प्रद्योत को उदयन से कोई द्वेष या वैर भाव नहीं है, फिर भी वह वत्सराज से मधुर सम्बन्ध रखना चाहता है। वह स्वयं उदयन को 'गुणशाली' 'कुञ्जरज्ञानदृप्त:' 'वीरमानी' आदि कहा करता है। इससे इसकी गुण ग्राहकता स्पष्ट रूप से झलकती है। वह बहुत ही दयालु एवं उदात्त चरित्र का पात्र है। वह वत्सराज के बन्दी बना लिये जाने पर आदेश देता है कि 'उदयन के साथ राजकुमार जैसा व्यवहार किया जाय।' इसी स्थल पर वत्सराज के प्रति उनका स्नेह झलक जाता है ब्राह्मणों के प्रति उसमें पर्याप्त निष्ठा है और वह विश्वास करता है कि ब्राह्मण कभी झूठ नहीं बोलते। सर्वाधिक आकर्षक व्यक्तित्व उसका उस समय उभर कर सामने आता है, जब वह अपने शत्रु के विशेषताओं को बिना हिचकिचाहट के स्वीकार कर लेता है। वह विपरीत परिस्थितियों में भी एक समान रहकर धैर्य का परित्याग नहीं करता। यही कारण है कि जब उसे उज्जयिनी से वत्सराज और वासवदत्ता की भागने की सूचना मिलती है तो वह विचलित नहीं होता। अपितु आत्म हत्या के लिये उद्यत राजमहिषी को उन दोनों के भागने को गान्धर्व विवाह का रूप देकर समाश्वस्त करता है। संक्षेप में हम यह कह सकते हैं कि प्रद्योत महासेन एक धैर्यवान् प्रसन्न एवं प्रतिष्ठित व्यक्तित्व का पात्र है।

रुमण्वान् तथा विदूषक वसन्तक—प्रतिज्ञा यौगन्धरायण का विदूषक भी कम महत्व का नहीं है। वह 'वसन्तक' नाम से जाना जाता है। यौगन्धरायण के शब्दों में रुमण्वान् भी बहुत ही चतुर एवं प्रत्युत्पन्नमतित्व वाला व्यक्ति है। दोनों स्वामी भक्त हैं। ये लोग भी सुख और दुःख में सदैव राजा का साथ देते हैं। विदूषक में धैर्य की मात्रा कम है। वैसे इन दोनों का चरित्र प्रस्तुत नाटक में उभर कर सामने नहीं आया है। क्योंकि यौगन्धरायण के चरित्र के सामने इन लोगों को चरित्र असफल-सा प्रतीत होता है।

# प्रतिज्ञायौगन्धरायण का कथासारांश

कौशाम्बी का राजा वत्सराज उदयन बीणा बजाने में अत्यन्त निपुण था। वह हाथियों को वश में करने की विद्या भी जानता था। उसके गुणों से प्रसन्न होकर अवन्ती के राजा प्रद्योत ने, जिसे महासेन भी कहते थे, उससे अपनी कन्या वासवदत्ता का व्याह करना चाहा किन्तु वह सफल न हुआ एक दिन प्रद्योत को यह पता चला कि वत्सराज नागवन में शिकार करने के लिये आयेगा। इसलिये उसने सालवृक्ष के वन में एक कृत्रिम नीले हाथी का निर्माण कराकर उसके समीप अपने सैनिकों को नियुक्त कर दिया। वत्सराज नीले कृत्रिम हाथी को वास्तविक जानकर उसका शिकार करवे गया पर वह उसे धोखा खाना पड़ा। प्रद्योत के सैनिकों ने उसे रण में पराजित कर बन्दी बना लिया और उसे अपने राजा के पास ले आये। प्रद्योत ने उसे अत्यन्त सम्मानित कर अपनी उसी वासवदत्ता का शिक्षक नियुक्त कर दिया। इस प्रकार सम्मिलन से आपस में उन दोनों का प्रेम हो गया और वे दोनों अवन्ती से भागने के लिये बेचैन हो उठे। उधर वत्सराज का अमात्य यौगन्धरायण अपने राजा के बन्दी बना लिये जाने पर अत्यन्त चिन्तित हो उठा। उसने अनेक उपायों स अपने स्वामी वत्स-राज को कारागार से मुक्त कराकर वासवदत्ता सहित उसे भद्रवती नामक वासवदत्ता की हथिनी पर बिठाकर अवन्तीसे भगा दिया। स्वयं रण करते हुए तलवार के टूट जाने पर पकड़ा गया। तदनन्तर महासन ने गान्धर्व विवाह की संज्ञा देकर उन दोनों का परिणय-संस्कार एक चित्रफलक पर कर दिया। उदयन के अमात्य यौगन्धरायण को भी पुरस्कार से सम्मा-नित कर मुक्त कर दिया। उधर वत्सराज तथा वासवदत्ता अवन्ती से भाग-कर कौशाम्बी में सुखपूर्वक राज्य करने लगे।

प्रथम अङ्क की कथा—वत्सराज अपने थोड़े से वीरों को लेकर नागवन में शिकार करने जाता है। वहाँ उसे नकली नीला हाथी दिखाई पड़ता है। उसे पकड़ने के लिये वत्सराज अकेले ही वीणा लेकर जाता है और रण में पराजित होकर प्रद्योत के सैनिकों द्वारा बन्दी बना लिया जाता है। उधर

वत्सराज के मन्त्री यौगन्धरायण को इस बात का पता चलता है कि प्रद्योत हमारे स्वामी को कृत्रिम नीले हाथी की रचना कर धोखा देना चाहता है। इस पर वह राजा को बचाने के लिये सालक को उनके पास भेजना चाहता है, किन्तु इसी बीच हंसक आकर यौगन्धरायण से वत्सराज के बन्दी बना लिये जाने का समाचार बतलाता है। यौगन्धरायण इस वृत्तान्त को सुनकर अत्यन्त दुःखी हो उठता है और प्रतीहारी से यह हाल राजमाता से कहने के लिये कहता है। प्रतीहारी द्वारा राजमाता वत्सराज के पकड़े जाने का समाचार सुनकर यौगन्धरायण से यह प्रार्थना करती है कि मेरे पुत्र को कैद से छुड़ाकर मेरे पास लाओ। यौगन्धरायण भी राजा को छुड़ाकर लाने की प्रतिज्ञा करता है। उसे द्वैपायन व्यास जी कुछ ऐसे वस्त्र प्रदान करते हैं जिनसे वह अपने को छिपाकर शत्रु-पुर में स्वच्छन्द भ्रमण कर सके।

द्वितीय अङ्क की कथा—इस अङ्क में सर्वप्रथम महासेन अपनी रानी अङ्गारवती से अपनी पुत्री वासवदत्ता के विवाह के सम्बन्ध में कुछ परामर्श करता है। उसी समय वत्सराज के बन्दी बना लिये जाने का समाचार पाकर वह आदेश देता है कि उदयन का उचित सत्कार किया जाय और उसे सब पुरवासी लोग देखें। तदनन्तर महासेन वत्सराज का यथोचित सम्मान कर उसे अपनी पुत्री वासवदत्ता का शिक्षक नियुक्त कर देता है और मन ही मन उसे अपनी पुत्री देने का भी विचार करता है।

तृतीय अङ्क की कथा—इस अंक में सबसे पहले यह दिखाया गया है कि किस प्रकार यौगन्धरायण उन्मत्तक का, विदूषक डिण्डिकका और रुमण्वान् श्रमणक का वेष धारण कर अपने स्वामी वत्सराज को छुड़ाने के प्रयत्न में लगे हैं। यौगन्धरायण प्रद्योत के अनुचरों को प्रभूत धन प्रदान कर उनको अपने वश में कर लेता है। अपने सैनिकों को अनेक वेष धारण कराकर यत्र-तत्र अवन्ती में ठहराता है तथा रुमण्वान् और विदूषक से परामर्श कर वत्सराज को छुड़ाने की एक युक्ति सोचता है। उस युक्ति के अनुसार वह राजा के हाथी नलागिरि को अनेक उपायों से पागल बना देता है। हाथी काबू के बाहर हो जाता है और उसे कोई पकड़ नहीं सकता। अन्त में प्रद्योत स्वयं वत्सराज से अनुरोध करता है कि नलागिरि को अपने वश में करो

और ऐसा करने के लिये वह वत्सराज को मुक्त भी कर देता है। यौगन्धरायण भी वत्सराज को वासवदत्ता सहित भगाने की प्रतिज्ञा करता है।

चतुर्थ अंक की कथा—इस अंक में यह दिखाया गया है कि वत्सराज वासवदत्ता को लेकर भद्रवती नामक हथिनी पर सवार होकर भाग जाता है। उसको पकड़ने के लिये प्रद्योत की सेना दौड़ती है, किन्तु गुप्त रूप से छिपे हुए यौगन्धरायण के सैनिक भी लड़ने को तैयार हो जाते हैं। इस पर दोनों सेनाओं में घोर संग्राम होता हैं और अपने तलवार के टूट जाने पर यौगन्धरायण पकड़ लिया जाता है। पकड़े जाने के वाद महासेन के अमात्य भरतरोहक और यौगन्धरायण में कुछ वाद-विवाद होता है। इसी बीच प्रद्योत यौगन्धरायण के लिये एक सोने का कटोरा प्रेषित करता है। पहले तो यौगन्धरायण उसे ग्रहण करने से इनकार करता है परन्तु बाद में जब उसे यह मालूम होता है कि महासेन ने वासवदत्ता और वत्सराज का विवाह स्वीकार कर लिया है, तब वह भी सहर्ष उस उपहार को अंगीकार कर लेता है।

# सूक्ति-संग्रह

साहित्य प्रेमियों के लिये हम महाकवि भास की कुछ सूक्तियों का संग्रह इस प्रस्तुत नाटक प्रतिज्ञायौगन्धरायण से समुद्धृत कर देते हैं, जो पूर्वापर सम्बन्ध के बिना ही आसानी से समझ में आ जाती हैं—

(१) स्निग्धेष्वासज्यं कर्म यद् दुष्करं स्याद्
यो वा विज्ञाता सत्कृतानां गुणानाम्।
क्रीतं सामर्थ्यं यस्य तस्य क्रमेण
दैवप्रामाण्याद् भ्रश्यते वर्धते वा ॥ १।३ ॥

(२) व्यक्तं बलं बहु च तस्य न चैककार्यं
सङ्ख्यातवीरपुरुषं च न चानुरक्तम्।
व्याजं ततः समभिनन्दति युद्धकाले
सर्वं हि सैन्यमनुरागमृते कलत्रम् ॥ १।४ ॥

(३) परचक्रैरनाक्रान्ता धर्मसङ्करवर्जिता।
भूमिर्भर्तारमापन्नं रक्षिता परिरक्षति ॥ १।६ ॥

(४) प्रणिपतति निरुद्धः सत्कृतो धर्षितो वा ॥ १।११ ॥

(५) पूर्वं तावत् युद्धसम्बद्धदोषाः
प्रस्तोतव्या भावनाः संशयानाम्।
संदिग्धेऽर्थे चिन्त्यमाने विनाशे
रूढे शोके कार्यतत्त्वं निवेद्यम् ॥ १।१३ ॥

(६) काष्ठादग्निर्जायते मथ्यमानाद्
भूमिस्तोयं खन्यमाना ददाति।
सोत्साहानां नास्त्यसाध्यं नराणां
मार्गारब्धाः सर्वयत्नाः फलन्ति ॥ १।१८ ॥

(७) कुलं तावच्छ्लाघ्यं प्रथममभिकाङ्क्षे हि मनसा
ततः सानुक्रोशं मृदुरपि गुणो ह्येष बलवान्।
ततो रूपे कान्ति न खलु गुणतः स्त्रीजनभयात्
ततो वीर्योदग्रं न हि न परिपाल्या युवतयः ॥ २।४ ॥

(८) कन्यायाः वरसम्पत्तिः पितुः प्रायः प्रयत्नतः ।
भाग्येषु शेषमायत्तं दृष्टपूर्वं न चान्यथा ॥ २।५ ॥

(९) अदत्ते त्यागता लज्जा दत्तेति व्यथितं मनः ।
धर्मस्नेहान्तरं न्यस्ता दुःखिताः खलु मातरः ॥ २।७ ॥

(१०) अहः समुत्तीर्यं निशा प्रतीक्ष्यते
शुभे प्रभाते दिवसोऽनुचिन्त्यते ।
अनागतार्थान्यशुभानि पश्यतां
गतं गतं कालमवेक्ष्य निर्वृतिः ॥ ३।२ ।

(११) तुल्येऽपि कालविशेषे निशैव बहुदोषा बंधनेषु ।

(१२) व्यवहारेष्वसाध्यानां लोके वा प्रतिरज्यताम् ।
प्रभाते दृष्टदोषाणां वैरिणां रजनी भयम् ॥ ३।३ ॥

(१३) शक्या दर्पयितुं कः स्वहस्तरचिता भूमिः कटप्रच्छदा
पर्याप्तो निगलस्वनश्चरणयो कन्दर्पमालम्बितुम् ।
श्रुत्वा न भवेद्धि मन्मथरटः प्रत्यक्षतो बन्धने
रक्षार्थं परिगण्यमानपुरुषैः राजेति शब्दापनम् ॥ ३।६ ॥

(१४) नवं शरावं सलिलैः सुपूर्णं
सुसस्कृतं दर्भकृतोत्तरीयम् ।
तत्तस्य मा भून्नरकं स गच्छेद्
यो भर्तृपिण्डस्य कृते न युध्येत् ॥ ४।२ ॥

(१५) नीते रत्ने भाजने को निरोधः ॥ ४।११ ॥

(१६) न ह्यनारुह्य नागेन्द्रं वैजयन्ती निपात्यते ॥ ४।१९ ॥

(१७) समूलं वृक्षमुत्पाट्य शाखाश्छेत्तुं कुतः श्रमः ॥ ४।२० ॥

(१८) कृतापराधस्य हि सत्कृतिर्वधः । ४।२२ ॥

———

# नाटक के प्रमुख पात्र

## पुरुष पात्र—

यौगन्धरायण (उन्मत्तक)—वत्सराज उदयन का मुख्य मन्त्री।

रुमण्वान् (श्रमणक)—वत्सराज उदयन का द्वितीय मन्त्री।

विदूषक (वसन्तक)—वत्सराज उदयन का मित्र।

हंसक—वत्सराज के पास सर्वदा रहनेवाला अनुचर।

सालक—यौगन्धरायण का भृत्य एवं सन्देशवाहक।

निर्मुण्डक—यौगन्धरायण का अनुचर।

ब्राह्मण—यौगन्धरायण का मित्र।

काञ्चुकीय—प्रद्योत (महासेन) का कञ्चुकी।

भट—महासेन का सैनिक।

गात्रसेवक—भद्रवती नामक हथिनी का (जिसपर वासवदत्ता सवारी करती थी) महावत और यौगन्धरायण का एक गुप्तचर।

(राजा) प्रद्योत (महासेन)—उज्जयिनी का भूपति।

भरतरोहक—प्रद्योत (महासेन) का प्रधान मन्त्री।

बादरायण—प्रद्योत ( महासेन ) के राजमहल का एक विशिष्ट कर्मचारी।

गोपालक और अनुपालक—महासेन के दोनों पुत्र।

साधारणी—महासेन के सामान्य नौकर।

## स्त्री-पात्र—

अङ्गारवती—(देवी) महासेन की राजमहिषी (पत्नी)

वासवदत्ता—प्रद्योत महासेन की पुत्री और बाद में वत्सराज की पत्नी।

विजया—वत्सराज की प्रतिहारि।

॥ श्रीः ॥

# प्रतिज्ञायौगन्धरायणम्

## 'अर्चना' संस्कृत-हिन्दीव्याख्योपेतम्

### अथ प्रथमोऽङ्कः

( नान्द्यन्ते ततः प्रविशति सूत्रधारः )

जयन्ति वाणासुरमौलिलालिता
दशास्यचूडामणिचक्रचुम्बिनः ।
सुरासुराधीशशिखान्तशायिनो-
भवच्छिदस्त्र्यम्बकपादपांसवः ॥

तत्रभवान् कविताकामिन्याः हासो महाकविभासः सचेतसां स्वान्तमनुरञ्जनाय 'प्रतिज्ञायौगन्धरायणम्' इत्याख्यं रूपकं प्रस्तौति—'नान्द्यन्ते' इत्यादिना । प्रतिज्ञाभिः प्रतीतो यौगन्धरायणः यस्मिन् तत् ( नाटकम् ) प्रतिज्ञायौगन्धरायणम्—इत्यन्वर्थकं रूपकम् । नान्द्यन्ते=गीतवाद्यवादनादिक्रियाऽवसाने, [1]सूत्रधारः=अभिनेयपदार्थानुष्ठानकर्मणि कुशलो जनः, ततः=तस्मात् स्थानात्, नेपथ्यादिति भावः । अथवा ततो नाम [2]नान्दीविधानाव्यवहितोत्तरकाल एवेत्याशयः । प्रविशति = प्रवेशं विदधाति । रङ्गमञ्चमिति शेषः ।

नान्द्यन्ते—(मङ्गल-गीतवादित्र के अनन्तर सूत्रधार रङ्गमञ्च पर प्रवेश करता है ।)

---

१—नाट्योपकरणादीनि सूत्रमित्यभिधीयते ।
सूत्रं धारयतीत्यर्थे सूत्रधारो निगद्यते ॥

२—आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥ सा० द० ६।२४

सूत्रधारः—

पातु वासवदत्तायो महासेनोऽतिवीर्यवान्।
वत्सराजस्तु नाम्ना सशक्तिर्यौगन्धरायणः ॥ १ ॥

तत्रभवान् महाकविः भासः स्वप्रारप्स्यमाणरूपकस्य निर्विघ्नपरिसमाप्तिसमीहया 'सूत्रयेद्वस्तु बीजं वा मुखं पात्रमथापि वा' इत्युक्तदिशा प्रधानपात्रनामधेयसूचनपुरस्सरं सूत्रधारद्वारा पात्रोपक्षेपरूपं वस्तुनिर्देशात्मकं मङ्गलं समाचरति—पातु वासवदत्ताय इति।

अन्वयः—वासवदत्तायः अतिवीर्यवान् सशक्तिः यौगन्धरायणः नाम्ना तु वत्सराजः महासेनः पातु।

व्याख्या—वासवदत्तायः=पुरन्दरसम्पत्तिप्रदाता, ('सुत्रामा गोत्रभिद्वज्रीवासवोवृत्रहावृषा' इत्यमरः) वासवाय=इन्द्राय, वासवस्य वा दत्तः अयः शुभावहो विधिः, आयो लाभो वा येन स तथाभुत इति वासवदत्तायः। अतिवीर्यवान्=अतिशयेन वीरः, शक्त्या आयुधविशेषेण सहवर्तते—इति सशक्तिः = शक्तिसमन्वितः, यौगन्धरायणः = युगन्धरस्य मिथुनरूपधारिणः शिवस्यापत्यं पुमान्, नडादित्वात् 'नडादिभ्यः फक्' इति सूत्रेण फक्, तस्य स्थाने 'आयनेयी'—इत्यादिना आयनादेशे 'यौगन्धरायणः' = शिवात्मज इति भावः। अथवा युगन्धरः पर्वतविशेषः, साल्वावयवो देशविशेषो वा, युगन्धरस्य सम्बन्धि यौगन्धरम् अयनं निलयो यस्य सः यौगन्धरायणः युगन्धरक्षेत्रप्रतिष्ठित इत्याशयः। नाम्ना तु = व्यपदेशेन, वत्सो बालश्चासौ राजा च वत्सराजः = बालराजः, महासेनः = स्कन्दः, षडाननो वा ('कार्तिकेयो महासेनः शरजन्मा षडाननः' इत्यमरः) वः = रूपकप्रेक्षकान् पातु = अवतु। वासवदत्ता-महासेनवत्सराजयौगन्धरायणानां प्रधानपात्राणां समूचनतया मुद्रालङ्कारोऽत्र, 'सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः' इति लक्षणात्। भावध्वनिरत्र। अनुष्टुब्नामवृत्तम्, तल्लक्षणं यथा—

सूत्रधार—सुराधिपति शक्र को समग्र ऐश्वर्य प्रदान करने वाले, अतिशय शक्तिसम्पन्न, 'शक्ति' नामक शस्त्र को धारण करनेवाले, भगवान् शंकर के आत्मज, वत्सराज स्वामी कार्तिकेय (षडानन) नाटक देखनेवाले आप सब सामाजिकों की रक्षा करें ॥ १ ॥

( परिक्रम्य नेपथ्याभिमुखमवलोक्य ) आर्ये ! इतस्तावत् ।

( प्रविश्य )

नटी—अय्य ! इअह्मि । [ आर्य ! इयमस्मि । ]

सूत्रधारः—आर्ये ! गीयतां तावत् किञ्चिद् वस्तु । ततस्तव गीत-

---

श्लोके षष्ठं गुरुर्ज्ञेयं सर्वत्र लघुपञ्चमम् ।

द्वितुर्यपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ।। इति ।

शक्राय समग्रैश्वर्यदाता शक्तिसमन्वितोऽतिशयेनवीरः शिवतनयो नाम्ना 'वत्सराजो महासेनः' इत्येवं रूपेण प्रथितः कार्तिकेयो नाटकप्रेक्षकान् सामाजिकान् रक्षतु—इत्यर्थः ।। १ ।।

'आर्ये !' इति नटीं प्रति सूत्रधारस्य शिष्टाचारः । 'इतः तावत् = इह तावत् , आगम्यताम्' इति तु भावगम्यम् । 'आर्य !' इति तु सूत्रधारं प्रति नट्याः शिष्टाचारः । इयमस्मि=इहास्मीत्याशयः ।

तावत् = सामाजिकानां समाराधनाय, किञ्चित् = स्वेच्छया यत्तवाभिरुचितम् , तत् वस्तु = सुष्ठु गीतम्, गीयताम्=समालप्यतामित्याशयः । ततः = तव गीतानन्तरम् गीतेन प्रसादिते गीतप्रसादिते=सङ्गीतेन संतोषिते, रङ्गे = रङ्गमञ्चे, वयमपि = सूत्रधारोऽपि, आत्मार्थे बहुवचनप्रयोगः, [1]प्रकरणम् = कथासन्दर्भविशेषम्, आरभामहे=प्रारम्भं विधास्याम इत्या-

---

( घूमकर और नेपथ्य की तरफ अवलोकन करे) आर्ये ! यहाँ आओ ।

( प्रविष्ट होकर )

नटी—आर्य ! यह मैं समुपस्थित हूँ ।

सूत्रधार—आर्ये ! ( स्वेच्छानुसार ) कुछ गाओ । तुम्हारे गाने के

---

१—भवेत्प्रकरणे वृत्तं लौकिकं कविकल्पितम् ।
शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक् ।।
सापायधर्मकामार्थपरो धीरप्रशान्तकः ।
नायिकाकुलजा क्वाऽपि वेश्या क्वापि द्वयं क्वचित् ।।
—साहित्यदर्पण ६।२२४-२२६।।

प्रसादिते रङ्गे वयमपि प्रकरणमारभामहे। आर्ये! किमिदं चिन्त्यते। ननु गीयते!

नटी—अज्ज मए सिविणे ञ्ञादिकुलस्स अस्सत्थं विअ दिट्ठं। ताइच्छामि अय्येण कुसलविञ्ञाणणिमित्तं कंच्चि पुरुसं पेसिदुं। [अद्यमया स्वप्ने ज्ञातिकुलस्यास्वास्थ्यमिव दृष्टम्। तदिच्छाम्यार्येणकुशलविज्ञाननिमित्तं कञ्चित्पुरुषं प्रेषयितुम्।]

---

शयः। समाकर्ण्यापि निजवचनं मौनमाकलितां नटीं प्रेक्ष्य चिन्ताऽऽकुलितस्वान्तमिवालक्ष्य सूत्रधारः पुनः ब्रूते—आर्ये! किमिदं चिन्त्यते = आर्ये! भवत्या किं परिशोच्यते, 'ननु' शब्दः जिज्ञासार्थे वर्तते, गीयते? = गानं विधास्यसि न वेत्याशयः।

अद्य=अस्मिन् दिवसे, मया = नट्या, स्वप्ने = स्वप्नावस्थायाँ, ज्ञातिश्च कुलं चेति ज्ञातिकुलम्, तस्य ज्ञातिकुलस्य=तातान्वयस्य तथा बन्धुवर्गस्य च, न स्वास्थ्यम् इति अस्वास्थ्यम्=कुशलराहित्यं, दृष्टम्=अवलोकितम्। तत् = तस्माद्धेतोः, इच्छामि = अभिलषामि, आर्येण = भवता सूत्रधारेण कुशलस्य विज्ञानम् इति कुशलविज्ञानम्, कुशलविज्ञानस्य निमित्तमिति कुशलविज्ञाननिमित्तम्=कुशलवार्ताविज्ञातुम्, कञ्चित् पुरुषं = कमप्यनुचरम्, प्रेषयितुं= गमयितुम्।

आर्य! स्वप्नावस्थायां बान्धवानां तथा कुलस्य चास्वास्थ्यं मयाऽवलोकितम्। अतोऽभिलषामि यद् भवान् कमपि जनं कुशलवार्तां ज्ञातुं प्रेषयत्विति भावः।

---

अनन्तर संगीत से जब रङ्गमञ्च (दर्शकगण) प्रसन्न हो जायेगा, तब हम अपना प्रकरण (नाटक का एक भेद) आरम्भ करेंगे। आर्ये! यह क्या सोच रही हो? क्यों गाओगी या नहीं गाओगी!

नटी—आज स्वप्न में मैंने जाति और अपने परिवार वालों को (अर्थात् अपने पीहर के लोगों को) अस्वस्थ देखा है। अतः मेरी इच्छा है कि आप उनलोगों का कुशलवृतान्त के परिज्ञान के लिये किसी दूत को संप्रेषित करें।

सूत्रधारः—बाढम् ।
पुरुषं प्रेषयिष्यामि व्यक्तमात्महिते क्षमम् ।
( नेपथ्ये ) सालक ! सज्जस्त्वम् ?
सूत्रधारः—
पुरुषं प्रेषयत्येष यथा यौगन्धरायणः ॥ २ ॥
( निष्क्रान्तौ )
[1]स्थापना

---

बाढम् = अङ्गीकारेऽर्थे प्रयोगः ।

अन्वयः—आत्महिते क्षम व्यक्तं पुरुषं प्रेषयिष्यामि ।

व्याख्या—आत्मनः हितम् ( ष० त० ) आत्महितम्, तस्मिन्नात्महिते=स्वकल्याणसाधने, क्षमं=योग्यं, व्यक्तं=धीमन्तं, ( 'व्यक्तं स्पष्टे बुधे तु ना' इति मेदिनी ) पुरुषं=एवम्भूतं जनं, प्रेषयिष्यामि=प्रेषणं विधास्यामि ।

सालक ! इति कमप्यनुचरं प्रति सम्बोधनम् । त्वं सज्जः = तत्परोऽसि किं मन्नियोगानुष्ठानाय ।

अन्वयः—यथा एष यौगन्धरायणः पुरुषं प्रेषयति ।

व्याख्या—यथा=येन प्रकारेण, एषः=अयम् , यौगन्धरायणः = उदयनसचिवः, पुरुषं=दूतं, 'व्यक्तमात्महिते क्षमम्' इत्यत्रापि सम्बध्यते । प्रेषयति = गमयति, तथाहमपि पुरुषं प्रेषयामीति पूर्वार्धेन सह सम्बन्धः । अनुष्टुब्नाम वृत्तमत्र—लक्षणन्तु पूर्वमेवोक्तम् ॥ २ ॥

---

सूत्रधार—बहुत ठीक । अपना कार्य सम्पादन करने में जो समर्थ हो ऐसे किसी मतिमान् पुरुष को भेजूँगा ।

( नेपथ्य में ) सालक ! क्या तुम तैयार हो ?

सूत्रधार—यौगन्धरायण की तरह मैं इस जन को भेज रहा हूँ ॥ २ ॥

( दोनों निकल जाते हैं )

स्थापना

---

१—नटी विदूषको वाऽपि पारिपार्श्विक एव वा
सूत्रधारेण सहितः संलापं यत्र कुर्वते ।

( ततः प्रविशति यौगन्धरायणः सालकेन सह )

यौगन्धरायणः—सालक ! सज्जस्त्वम् ?

सालकः—अय्य ! अहइ । [आर्य ! अथ किम् । ]

यौगन्धरायणः—महान् खल्वध्वा गन्तव्यः ।

सालकः—महत्तरेण सिणेहेण अय्यं उवचिट्ठामि । [ महत्तरेण स्नेहेनार्यमुपतिष्ठे । ]

---

( ततः = तदनन्तरं, यौगन्धरायणः = एतन्नामको जनः, सालकेन = एतदाख्येन, सह = साकं, प्रविशति=प्रवेशं विदधाति ।)

सालक ! भो सालक ! सज्जः = सन्नद्धः किम् , त्वम्=भवान् , मत्कार्यसम्पादनायेति शेषः ।

आर्य ! सालकस्य यौगन्धरायणं प्रति समुदाचारः । अथ किम्=बाढम् , त्वन्नियोगसम्पादनाय सज्जोऽस्मीति स्वीकरणम् ।

महान् = दीर्घः, खलु = इति निश्चये, अध्वा=मार्गः, गन्तव्यः=यातव्यो विद्यते, तवेति शेषः ।

महत्तरेण = अतिमहता, स्नेहेन=प्रेम्णा, आर्यं=भवन्तं, उपतिष्ठे = सेवे । यद्यपि महान् अध्वा गन्तव्यस्तथापि तदपेक्षया महत्तरस्त्वद्विषयः स्नेहस्तथाविधं खेदमपनेष्यतीति विचिन्त्य बुद्धिपूर्वमेत्र मया कार्यमङ्गीकृतमित्यभिप्रायः ।

---

( तदनन्तर सालक के साथ यौगन्धरायण प्रविष्ट होता है )

यौगन्धरायण—सालक ! क्या तुम तैयार हो !

सालक—आर्य ! और क्या ( अर्थात् मैं तैयार हूँ ) ।

यौग०—बहुत भारी मार्ग तय करना होगा ।

सालक—मैं आर्य की परिचर्या ( सेवा ) बड़े स्नेह से करता हूँ ।

---

चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा ॥

(सा. द. ६।३१-३२)

अथवा

एषोऽयमित्युपक्षेपात् सूत्रधारप्रयोगतः ।
पात्रप्रवेशो यत्रैष प्रयोगातिशयो मतः ॥—दशरूपक ३।११॥

यौगन्धरायणः—हन्त यास्यति बलवान्, यस्य सौहार्दम् । कुतः,

स्निग्धेष्वासज्यं कर्म यद् दुष्करं स्याद्
यो वा विज्ञाता सत्कृतानां गुणानाम् ।
क्रीतं सामर्थ्यं यस्य तस्य क्रमेण
दैवप्रामाण्याद् भ्रश्यते वर्धते वा ॥ ३ ॥

---

हन्त इत्यव्ययपदं हर्षे । 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः' इत्यमरः । बलवान् = शक्तिसमन्वितः, यास्यति = गमिष्यति, यस्य=जनस्य, सौहार्दं=प्रेम, विद्यत इति शेषः ।

अन्वयः—यत् दुष्करं कर्म स्यात् तत् स्निग्धेषु आसज्यम्, यः सत्कृतानां गुणानां वा विज्ञाता (तस्मिन्), क्रमेण क्रीतं यस्य तस्य सामर्थ्यं दैवप्रामाण्याद् भ्रश्यते वर्धते वा ॥ ३ ॥

व्याख्या—यत् = यत्किमपि, दुष्करं = श्रमसाध्यं, कठिनं वा, कर्म = कार्यं, स्यात्=भवेत्, तत् = कर्म, स्निग्धेषु = वत्सलेषु नियोज्येषु, 'स्निग्धस्तु वत्सलः' इत्यमरः, विश्वासपात्रेष्वित्याशयः, आसज्यं=निर्वाह्यतया समर्पयितुं योग्यम् । स्नेहवान् हि नियोक्तुः कार्यमगणितश्रमः सन् विदधातीति भावः । यः = जनः, सत्कृतानां=समर्थितानां, गुणानाम् = आसज्यमानकर्मप्रभवाणां लोकहितानां फलानां, विज्ञाता = अभिज्ञः, भवति, (तस्मिन् दुष्करं कर्म नियोज्यमिति योज्यम्) । गुणज्ञः हि नियोक्तरि अस्निग्धोऽपि तदर्पितं कर्म स्वीयम् इव अगणितश्रमः सन् अनुतिष्ठतीति भावः । क्रमेण = न्यायेन, विधिना वा, ('कल्पेविधिक्रमौ' इत्यमरः) क्रीतम् = नियोक्त्रा आयत्तीकृतं, यस्य तस्य = वत्सलगुणज्ञयोरन्तराले यस्य कस्यापि, सामर्थ्यम्= कार्यचातुर्यम् दैवप्रामाण्याद् = नियोक्तृदिष्टाधीनात्, भ्रश्यते = नश्यते,

---

यौग०—अवश्य, जिसको सौहार्द (प्रेम) है, वह बलवान जायेगा । क्योंकि—

जो दुष्कर (कठिन कार्य हो) वह प्रेमीजन के निमित्त (करने के लिये) छोड़ देना चाहिये अर्थात् उन्हें सौंप देना चाहिये । अथवा जो अच्छे गुणों का ज्ञाता हो, उसको ऐसे कार्य का भार देना चाहिये । इन दोनों में से जिस

**अथ वेणुवनाश्रितेषु गहनेषु नागवनं श्वः प्रयाता स्वामी प्रागेव सम्भावयितव्यः ।**

सालकः—अय्य ! लेहो खु मं ओवज्झइ, जहि आअत्तं कय्यसरीरं ।
[ आर्य ! लेखः खलु मामपवहति, यस्मिन् आयत्तं कार्यशरीरम् । ]

---

फलाच्च्यवत इति भावः, वर्धते=फलेन संयुज्यते वा । वैश्वदेवी नाम वृत्तमत्र-'बाणाश्वैच्छिन्ना वैश्वदेवी ममौ यौ' इति लक्षणात् ।। ३ ।।

अथ=एतदनन्तरं, वेणुवनाश्रितेषु = वेणुकाननसन्निकृष्टवर्तिषु, गहनेषु=विपिनेषु ( 'अटव्यरण्यं विपिनं गहनं काननं वनम्' इत्यमरः ) मध्ये नाग-वनं = एतदाख्यं हस्तिबहुलमरण्यम्, ( 'गजेऽपि नागमातङ्गौ' इत्यमरः ) श्वः=आगामिवासरे, स्वामी = वत्सराजः प्रयाता=गमिष्यति, इति=अस्माद्धेतोः, प्रागेव=नागवनप्रस्थानात्पूर्वमेव, सम्भावयितव्यः = द्रष्टव्यः । त्वया तथा जवमाश्रित्य यातव्यं मया स्वामीप्रयाणात्पूर्वमेव दृश्यो भवेदिति ।

आर्य ! = सालकस्य यौगन्धरायणं प्रति समुदाचारः । यस्मिन् = पत्रे, आयत्तम् = अधीनम् , कार्यशरीरं = विज्ञाप्यार्थस्वरूपं, ( सः ) लेखः – पत्रम् , माम् = सालकम्, अपवहति = प्रयातुं नानुमन्यते, विलम्बयत इत्याशयः । मन्नेतव्यलेखग्रहणप्रतीक्षाकृत एवास्माकं प्रस्थानविलम्बः, एतावता क्षिप्रं मे लेखो दीयताम् येनाऽहं सद्योऽस्मात्स्थानात् प्रस्थानस्य इति भावः ।

---

किसी की कर्म-कुशलता न्यायपूर्वक अपने ( काम कराने वाले के ) अधीन किया हुआ होने पर दैववश ही ( नियोक्ता के भाग्य अथवा दुर्भाग्य से ) निष्फल अथवा सफल होता है ।। ३ ।।

इसके अनन्तर अब वेणुवन-समीपस्थ गहनवन के मध्य स्थित 'नागवन' को कल ही स्वामी वत्सराज चले जायेंगे, एतावता उससे पूर्व ही मुझे मिल लेना चाहिये ।

सालक—आर्य ! यह लेख, जिसके अधीन मेरा सम्पूर्ण कार्य है, जाने में मुझे विलम्ब ( देर ) कर रहा है, ( अर्थात् यह पत्र पाऊँ, तो शीघ्र प्रस्थान करूँ )

यौगन्धरायणः—विजये !

( प्रविश्य )

विजया—अय्य इअह्मि । [ आर्य ! इयमस्मि । ]

यौगन्धरायणः—विजये ! त्वर्यतां लेखः प्रतिसरा च ।

विजया—अय्य ! तह । [ आर्य ! तथा । ] ( निष्क्रान्ता )

यौगन्धरायणः—अथ दृष्टपूर्वस्त्वयैव पन्थाः ।

---

विजये ! = इति तु कस्याश्चित् सेविकायाः कृते सम्बोधनम् ।

( प्रविश्य = विजया प्रवेशं विधाय )

आर्य ! इति विजयायाः यौगन्धरायणं प्रति समुदाचारः । इयमस्मि = इहास्मि—इति भावः ।

विजये ! इति सम्बोधनम् । त्वर्यताम् = क्षिप्रमानीयतां, लेखः=पत्रम् , प्रतिसरा च = रक्षासूत्रञ्च, ( 'प्रतिसरस्तु स्याद्धस्तसूत्रे नृपण्डयोः.........। व्रणशुद्धौ च केचित्तु स्त्रियां प्रतिसरां विदुः । इति केशवः । 'ना चमूजघने हस्तसूत्रे प्रतिसरोऽस्त्रियाम्' इत्यमरः । )

आर्य ! इति सम्बोधनम्, तथा=बाढमित्यङ्गीकारे वचनम् । ( निष्क्रान्ता = निर्गता ) ।

अथ = इति प्रश्ने, ( 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः ) त्वया = भवता, एष=अयं, पन्थाः=मार्गः, ( 'अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः । सरणिः पद्धतिः पद्यावर्तन्येकपदीति च ॥' इत्यमरः ) पूर्वं प्रथमं दृष्टः इति दृष्टपूर्वः = पूर्वमवलोकितः ।

---

यौग०—विजये ।

( प्रवेश कर )

विजया—आर्य ! यह मैं ( उपस्थित ) हूँ ।

यौग०—विजये ! लेख ( पत्र ) और रक्षासूत्र लाने में जल्दी करो ।

विजया—आर्य ! ठीक है ! ( निकल जाती है )

यौग०—क्या तुमने इस मार्ग को देखा है ?

सालकः—णहि, सुदपुव्वो। [ नहि, श्रुतपूर्वः। ]

यौगन्धरायणः—एतदपि मेधाविलक्षणम्। भोः ! वनगजप्रच्छादितशरीरं नीलहस्तिनमुपन्यस्य प्रद्योतः स्वामिनं छलयितुकाम इति प्रवृत्तिरुपगता नः। अपीदानीं स्वामिनो बुद्धयतिक्रमो न स्यात्। अहो नु खलु वत्सराजभीरुत्वं प्रद्योतस्य। व्यक्तीकृतमसामर्थ्यमक्षौहिण्याः।

---

नहि = इत्यस्वीकारे वचनम्, पूर्वं श्रुत इति श्रुतपूर्वः = पूर्वमाकर्णितः ( पन्थाः = मार्गः )।

एतदपि = इदमपि, मेधाविलक्षणम् = धिषणावतां चिह्नम्। भोः != हे !, वनगजप्रच्छादितशरीरं=आरण्यकद्विपतिरोहितावयवं, नीलहस्तिनम् = नीलगजम्, ( 'मतङ्गजो गजो नागः कुञ्जरो वारणः करी' इत्यमरः ) उपन्यस्य = संस्थाप्य, प्रद्योतः = एतन्नामकोऽवन्तिभूपः, महासेनो वा, स्वामिनं=महीपतिं वत्सराजम्, उदयनं वा, छलयितुकामः = वञ्चनाभिलाषुकः, वर्तत इति—एतादृशी, प्रवृत्तिः = वार्ता, सूचना वा, ( 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्याद्' इत्यमरः ) नः = अस्माकम्, उपगता = अधिगता। अपि = सम्भावनायां ( 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि' इत्यमरः ) इदानीं=साम्प्रतं ( 'एतर्हि सम्प्रतीदानीमधुनासांप्रतं' इत्यमरः ) स्वामिनः=वत्सराजस्योदयनस्य, बुद्धयतिक्रमः=शेमुषीवैपरीत्यम्, न स्यात्= मा भवेत्, अहो नु खलु = अद्भुतमेतत्, वत्सराजभीरुत्वं = उदयनजनितत्रासत्वम्, प्रद्योतस्य = महासेनस्य। तस्य, अक्षौहिण्याः=अपरिमितपृतनायाः, असामर्थ्यम्=निर्बलत्वम्, व्यक्तीकृतम्=सुस्पष्टमेव।

---

सालक—नहीं, पहले सुना है।

योग०—यह भी बुद्धिमानों का लक्षण ( चिह्न ) है। चारों ओर से आरण्यक गजों द्वारा छिपाकर एक नीले हाथी की मृषा संरचना करके प्रद्योत स्वामी को ठगना चाहता है, ऐसी सूचना मुझे प्राप्त हुई है। भगवान् करें, स्वामी वत्सराज की बुद्धि मार्गभ्रष्ट न हो। आश्चर्य है कि प्रद्योत वत्सराज से इतना भयभीत है। उसकी अक्षौहिणी ( अपरिमित सेना )

कुतः—

व्यक्तं बलं बहु च तस्य न चैककार्यं
सङ्ख्यातवीरपुरुषं च न चानुरक्तम् ।
व्याजं ततः समभिनन्दति युद्धकाले
सर्वं हि सैन्यमनुरागमृते कलत्रम् ॥ ४ ॥

( प्रविश्य )

---

अन्वयः—तस्य बलं बहु च, एककार्यं न च, संख्यातवीरपुरुषं च, अनुरक्तं च न व्यक्तम् । ततः युद्धकाले व्याजं समभिनन्दति हि सर्वं सैन्यम् अनुरागम् ऋते कलत्रम् ।

व्याख्या—तस्य = प्रद्योतस्य, बलं = सैन्यं, बहु च = सातिशयं च भवतीति शेषः, एकं स्वामिकार्यातिरिक्तं कार्यं यस्य तत् एककार्यं, न च भवति, स्वामिनः कार्यमतिरिच्याप्यन्यानि कार्याणि भवन्तीति भावः । संख्याताः = परिमिताः, न तु बहवो वीरपुरुषाः यस्मिन् तत् तथा भूतं संख्यातवीरपुरुषं भवति, किन्तु अनुरक्तं = स्वामिनि स्नेहसमन्वितं, च न = न भवतीति व्यक्तं = प्रकाशितमेव । ततः, युद्धकाले = संग्रामकाले, व्याजं=नीलदन्तीसंरचनाप्रपञ्चम् , समभिनन्दति = आद्रियते, हि = यतः, सर्वं=अशेषं, सैन्यं = अनीकं, अनुरागमृते = स्वामिविषयस्नेहाभावे, कलत्रं= स्त्रियमिव, भवतीति शेषः । वसन्ततिलकावृत्तमत्र 'उक्ता वसन्ततिलका तभजाजगौगः' इति लक्षणात् ॥ ४ ॥

( प्रविश्य=प्रविष्टो भूत्वा )

---

की असमर्थता तो अभिव्यक्त हो चुकी । क्योंकि—

उसकी सैन्य-शक्ति बहुत हैं, किन्तु उसका एक ही कार्य नहीं है ( अर्थात् स्वामी के कार्य के अतिरिक्त, उसे अन्य कार्य भी हैं ) । उसकी सेना में परिमित ( चुने हुए ) वीर पुरुष हैं, जो स्वामी में अनुरक्त नहीं हैं । वह संग्राम के समय कपट प्रयोग का अभिनन्दन करता है । स्नेह के बिना संपूर्ण सेना स्त्री के समान है ॥ ४ ॥

( प्रवेश कर )

विजया—लेहो खु अअ। पडिसरा सव्ववहूजणहत्थादो तुवारीअदित्ति भट्टिमादा आह। [ लेखः खल्वयम्। प्रतिसरा सर्ववधूजनहस्तात् त्वर्यंत इति भर्तृमाता आह। ]

यौगन्धरायणः—विजये ! विज्ञाप्यतां तत्रभवत्यै—सर्ववधूजनहस्तयुक्ता वा एका वा प्रतिसरा दीयतामिति।

विजया—अय्य ! तह। [आर्य ! तथा। ] ( निष्क्रान्ता )

( प्रविश्य )

---

लेखः=पत्रम्, खलु=नूनन्, अयम्=इदम्। प्रतिसरा=रक्षासूत्रं, सर्वेषां राजभवनसन्निहितानां वधूजनानां पुरन्ध्रीजनानां हस्तात् इति सर्ववधूजनःहस्तात्=निखिलपुरन्ध्रीजनकरात्, त्वर्यते=क्षिप्रं स्पर्शयित्वा, गृह्यते, इति=एवं प्रकारेण, भर्तुःमाता भर्तृमाता=राजमाता, आह=जगाद। अयम्भावः-प्रतिसरायाः सर्ववधूजनकराभिमर्शनमङ्गलविधिः सामुदाचारिकः क्षिप्रं विधीयते, तस्मिन् निर्वृत्ते तां प्रेषयामि–इति विनिवेदयति राजमाता।

विजये ! इत्याह्वानार्थं सम्बोधनम्। विज्ञाप्यताम् = विनिवेद्यतां, तत्रभवत्यै=राजमात्रे, सर्ववधूजनानाँ हस्तैः प्रयुक्ता इति सर्ववधूजनहस्तप्रयुक्ता=अशेषान्तःपुरवासिनीकराभिमृष्टा वा, एका = अन्या वा, असर्ववधूजनकराभिमर्शनरहिता वेत्याशयः। प्रतिसरा=रक्षासूत्रम्, दीयतामिति = प्रदीयतामिति।

आर्य ! = विजयायाः यौगन्धरायणं प्रति समुदाचारः। तथा=वाढम्। ( निष्क्रान्ता=रङ्गमञ्चान्निर्गता )।

( प्रविश्य = प्रवेशं विधाय )

---

विजया—यह लेख ( पत्र ) है और रक्षासूत्र सब वधुओं के हाथ से स्पर्श करा कर शीघ्र ही प्रेषित किया जा रहा है। यह बात स्वामी की माता ने कही है।

यौग०—विजये ! राजमाता से निवेदन करो कि सब महारानियों के कर का संस्पर्श किया हुआ अथवा दूसरा ही रक्षासूत्र दें।

विजया—आर्य ! अच्छा ! ( निकल जाती है )

( प्रवेश कर )

निर्मुण्डकः—सुहं अय्यस्स । ] सुखमार्यस्य ]

यौगन्धरायणः—कथं निर्मुण्डकः ?

निर्मुण्डकः—अय्य ! एसो भट्टिपादमूलादो ओवट्ठिइओ हंसओ आअदो ।' ] आर्य ! एष भर्तृपादमूलादौपस्थितिको हंसकः आगतः । ]

यौगन्धरायणः—कथं हंसक एकः प्राप्त इति । सालक ? विश्रम्यतामिदानीं मुहूर्तम् । त्वरिततरं वा यास्यति सविश्रमे वा ।

सालकः—अय्य ! तह [ आर्य ! तथा ] ( निष्क्रान्तः )

---

सुखमार्यस्य=कल्याणमार्यस्य स्यात् ,

निर्मुण्डकः ! इति सम्बोधनम् , कथं=केन हेतुना इत्र संप्राप्त इति भावः ।

आर्य ! निर्मुण्डकस्य यौगन्धरायणं प्रति सम्बोधनम् । एषः = अयं, भर्तृपादमूलाद् = स्वामिचरणप्रान्तात्, उपस्थितिं समीपस्थितिं नित्यमर्हतीति औपस्थितिकः = नित्यं स्वामिचरणेऽन्तेवासी, ( 'तदर्हती'ति ठञ् । ) हंसकः=एतन्नामा, आगतः=संप्राप्तः ।

कथं = किमर्थं, हंसकः = एतदाख्यो जनः, एकः=एकाकी, प्राप्त इति=समागत इति । सालक ! इति सम्बोधनम् , विश्रम्यतां=विश्रमं सम्प्राप्यतां, इदानीं=एतर्हि, मुहूर्तम् = क्षणं यावत् । त्वरिततरं = क्षिप्रतरं, यास्यति = गमिष्यति, सविश्रमे वा=विश्रान्तो भविष्यसि वा ।

आर्य !-सालकस्य यौगन्धरायणं प्रति समुदाचारः । तथा=बाढम् । ( निष्क्रान्तः=निर्गतः )

---

निर्मुण्डक—आर्य का कल्याण हो ।

यौग०—निर्मुण्डक ! तुम कैसे ?

निर्मु०—आर्य ! स्वामी के समीप सर्वदा वर्तमान रहनेवाला हंसकः वहाँ से आया है ।

यौग०—हंसक अकेले कैसे आया ? सालक ?मुहूर्त भर विश्राम करो । विश्राम करने के अनन्तर शीघ्रता से चले जाना अथवा पुनः विश्राम करना ।

सालक—आर्य ! अच्छा । ( निकल जाता है )

यौगन्धरायणः—निर्मुण्डक ! प्रवेश्यतां हंसकः ।

निर्मुण्डकः—अय्य ! तह । ] आर्य ! तथा । ] ( निष्क्रान्तः )

यौगन्धरायणः—स्वामिना विरहितपूर्वो हंसक एकः प्राप्त इति

साविग्नमिव मे मनः । कुतः—

यथा नरस्याकुलबान्धवस्य गत्वान्यदेशं गृहमागतस्य ।
तथा हि मे सम्प्रति बुद्धिशङ्का श्रोष्यामि किन्तु प्रियमप्रियं वा ॥४॥

---

निर्मुण्डक ! इति सम्बोधनम् , प्रवेश्यतां = समानीयतां, हंसकः= एतदाख्यो जनः ।

आर्य ! इति सम्बोधनम् , तथा = बाढम् , ( निष्क्रान्तः=निर्गतः ) ।

पूर्वं स्वामिना अविरहितः इति स्वामिनाविरहितपूर्वः=भर्तृणाऽत्याजित पूर्वः, हंसकः=एतन्नामा, एकः=एकाकी, प्राप्तः=समागतः, इति =एतावता साविग्नमिव=सावेगमिव, मे=मम, मनः=मानसम् । कुतः = यतोहि—

अन्वयः—अन्यदेशं गत्वा गृहम् आगतस्य आकुलबान्धवस्य नरस्य यथा बुद्धिशङ्का तथा हि सम्प्रति मे प्रियम् श्रोष्यामि, किन्तु वा अप्रियम् ( श्रोष्यामि ) ।

व्याख्या—अन्यदेशं = देशान्तरं, विदेशमिति भावः, गत्वा=व्रजित्वा गृहम्=भवनम् , आगतस्य = संप्राप्तस्य, आकुलाः कुटुम्बवार्तानिवेदनं प्रत्युत्सुकाः बान्धवाः यस्य तस्य आकुलबान्धवस्य=समुत्सुकभ्रातृवर्गस्य, नरस्य= जनस्य, यथा=येन प्रकारेण, बुद्धिशङ्का=मनसश्चिन्ता, भवति, तथा = तेनैव प्रकारेण, हि=निश्चयेन, सम्प्रति=इदानीं, मे=मम, प्रियं=स्वामिनो मङ्गलं श्रोष्यामि=आकर्णयिष्यामि, किन्तु वा=अथवा अप्रियम्=अनिष्टं ( श्रोष्यामि श्रवणं विधास्यामि ) । उपेन्द्रवज्रा = इन्द्रवज्रावृत्तयोः सम्मिश्रणादुपजाति

---

यौग०—निर्मुण्डक ! हंसक को भीतर बुलाओ ।

निर्मु०—आर्य ! अच्छा । ( निकल जाता है )

यौग०—हंसक, जो इसके पूर्व स्वामी से कभी विलग नहीं हुआ था अकेले आया है । इससे मेरा मन उद्विग्न हो रहा है । क्योंकि—

विदेश जाकर पुनः घर लौटने पर जो दशा उस मनुष्य की होती है

( ततः प्रविशति हंसको निर्मुण्डकश्च । )

निर्मुण्डकः—एदु एदु अय्यो । [ एत्वेत्वार्यः । ]

हंसकः—कहिं कहिं अय्यो । [ कुत्र कुत्रार्यः ]

निर्मुण्डकः—एसो अय्यो चिट्ठइ, उवसप्पदु णं । [ एष आर्यस्ति-ष्ठति, उपसर्पत्वेनम् । ] ( निष्क्रान्तः )

हंसकः—( उपसृत्य ) सुहं अय्यस्स । [ सुखं आर्यस्य ]

---

नामवृत्तमत्र । तल्लक्षणमवलोकयन्तु सुधयः—

स्यादिन्द्रवज्रा यदि तौ जगौ गः ।
उपेन्द्रवज्रा प्रथमे लघौ सा ।।

अनन्तरोदीरितलक्ष्मभाजौ
पादौ यदीयावुपजातयस्ताः ।
इत्थं किलान्यास्वपि मिश्रितासु
वदन्ति जातिष्विदमेव नाम ।। इति ।। ५ ।।

( ततः = तदनन्तरं, प्रविशति=प्रवेशं विदधाति, हंसकः = तन्नामा, निर्मुण्डकश्च=एतन्नामको जनश्च )

आर्य ! निर्मुण्डकस्य समुदाचारः, एतु=आगच्छतु, एतु=आगच्छतु आर्य=स्वामी, कुत्र कुत्र=क्व विद्यते ।

आर्य=भर्ता, एष=अयं, तिष्ठति=वर्तते, उपसर्पतु=समीपं व्रजतु, एनम्=स्वामिनम् , ( निष्क्रान्तः=निर्गतवान् )

उपसृत्य=अन्तिकमुपेत्य, सुखं=कल्याणं भवतु, आर्यस्य=स्वामिनः ।

---

जिसके कुटुम्बी लोग व्याकुल रहते हैं, वहीं अवस्था इस समय मेरी हो रही है कि स्वामी का मुझे मङ्गल या अमङ्गल क्या सुनना पड़ेगा ? ।। ५ ।।

( उसके बाद हंसक और निर्मुण्डक प्रवेश करते हैं )

निर्मु०—आर्य ! आइये, आइये ।

हंसक—कहाँ ! आर्य कहाँ है ?

निर्मु०—आर्य यहाँ हैं । इनके पास आओ । ( निकल जाता है )

हंसक—( समीप पहुँचकर ) आर्य ! सकुशल हैं ।

यौगन्धरायणः—हंसक ! न खलु गतः स्वामी नागवनम् ।

अय्य ! हिज्जो एव्व गदो भट्टा ! ] आर्य ! ह्य एव गतो भर्ता । ]

यौगन्धरायणः—हन्त ! निष्फलमनुप्रेषणम् । छलिताः स्मः । अथास्ति प्रत्याशा, अथवा अद्यैव प्राणा मोक्तव्याः ।

हंसकः—धरदि खु दाव भट्टा । [ धरते खलु तावद् भर्ता । ]

यौगन्धरायणः—धरते तावदित्यनूर्जिता विपत्तिरभिहिता । गृहीतेन स्वामिना भवितव्यं ननु ।

---

हंसक !—इति सम्बोधनम् , स्वामी = भर्ता, नागवनम् = एतदाख्यं विपिनं, गतः = गतवान् न खलु = नैव, इति प्रश्नार्थे ।

आर्य ! = भो स्वामिन् , ह्यः = गतदिवसे, एव = निश्चयेन, भर्ता = प्रभुः, गतः = अगच्छत् ।

हन्त = इति खेदे, अनुप्रेषणं = पुनः दूतसम्प्रेषणम् , निष्फलम् = निरर्थकं खलु, छलिताः स्मः = वयं वञ्चिताः स्मः, अथ = इति जिज्ञासायाम् , अस्ति = विद्यते, प्रत्याशा = काचिदाशा, अथवा = इति वितर्के, अद्यैव = अस्मिन् दिवस एव, प्राणाः = असवः, मोक्तव्याः = त्यक्तव्याः ।

धरते = धारयति, खलु = निश्चयेन, तावद् = तावत्कालपर्यन्तं- भर्ता = स्वामी, प्राणानिति शेषः ।

धरते = धारयति, तावदसून्, इति = एवंप्रकारेण, न ऊर्जिता = अधिका महती वा इति अनूर्जिता = अमहती, विपत्तिः = विपद् , अभिहिता = कथिता, त्वयेति शेषः, गृहीतेन = बद्धेन, स्वामिना = प्रभुणा, भवितव्यं, ननु = खलु ।

---

यौग०—हंसक ! स्वामी नागवन चले तो नहीं गये ?

हंसक—आर्य ! स्वामी तो कल ही नागवन चले गये ।

यौग०—अब किसी को प्रेषित करना व्यर्थ है । हम लोग ठगे गये । क्या ! अब भी कुछ आशा है, अथवा आज ही प्राणों को छोड़ देना चाहिये ।

हंसक—स्वामी अभी प्राणों को धारण कर रहे हैं अर्थात् जीवित हैं ।

यौग०—स्वामी जीवन को धारण कर रहे हैं, तब कोई बड़ी विपत्ति नहीं है । परन्तु स्वामी अवश्य पकड़ लिये गये होंगे ।

हंसकः—सुट्ठु अय्येण विञ्ञादं । गहीदो भट्टा । [ सुष्ठु आर्येण विज्ञातम् । गृहीतो भर्ता । ]

यौग०—कथं गृहीतः स्वामी । हन्तः भोः । महान् खलु भारः प्रद्योतस्य भाग्यैर्निस्तीर्णः । अद्य प्रभृति वत्सराजसचिवानां प्रतिष्ठितमसामर्थ्यमयशश्च । इदानीमनुत्पन्नकार्यपण्डितो रुमण्वान् क्व गतः । इदानीमश्वारोहणीयं क्व गतम् । कुतः—

---

सुष्ठु = सम्यक्तया, आर्येण = भवता, विज्ञातम् = अवगतम् , गृहीतः= बद्धः, भर्ता=स्वामी ।

कथं = केन प्रकारेण, गृहीतः = बद्धः, स्वामी = भर्ता वत्सराजः इति महदाश्चर्यम् । हन्त !=इति वाक्यारम्भे, भोः=इति सम्बोधनम्, महान् खलु भारः=वत्सराजग्रहणरूपं दुष्करं कर्म, प्रद्योतस्य = एतन्नामकस्य नरपतेः, भाग्यैः=भागधेयैः, निस्तीर्णः=साधितः, अद्यप्रभृति=अस्माद्दिवसादारभ्य, वत्सराजसचिवानाम्=वत्सराजामात्यानाम् , असामर्थ्यं=शक्तिविरहितत्वम्, अयशश्च=अपकीर्तिश्च, प्रतिष्ठितम्=प्रथितम् , सर्वे जनाः परस्परमिदमेव निगदिष्यन्ति यत् वत्सराजमन्त्रिणः निर्बलाः विवेकहीनाश्च विद्यन्त इत्याशयः । इदानीम्=गृहीते प्रभौ, अनुत्पन्नकार्यपण्डितः=उत्पन्ने कार्ये अपण्डितः, अप्रत्युत्पन्नमतिः, रूमण्वान्=एतन्नामकोऽमात्यः, क्व=कुत्र, गतः =गतवान् , इदानीम्=अधुना, अश्वम् आरोहति इति अश्वारोहणीयम्=सादिबलं, ( 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् कर्तरि अनीयर् ।) क्व=कुत्र, गतम्=लुप्तम् । कुतः=यतो हि ।

---

हंसक—आर्य ने ठीक ज्ञात किया । स्वामी पकड़ लिये गये ।

यौग०—स्वामी कैसे पकड़े गये ! प्रद्योत के भाग्य से महान् दुष्कर कार्य ( वत्सराज का पकड़ा जाना ) पूर्ण हो गया । आज से वत्सराज के सचिवों की निर्बलता और अपकीर्ति संसार में फैल गई । अवसर समुपस्थित होने पर चतुराई से कार्य न करने वाला रूमण्वान् कहाँ था ? उस समय अश्वारोही सेना कहाँ चली गई थी ? क्योंकि—

स्निग्धं च सौहृदहृतं च कुलोद्गतं च
व्यायामयोग्यपुरुषं च गुणार्जितं च ।
क्रीतं परैर्गहनदुर्गतया प्रनष्टं
युद्धे समस्तमतिभारतया विपन्नम् ॥ ६ ॥

हंसकः—जइ समग्गजोहबलपरिवारो भवे भट्टा, ण एसो दोसो भवे।

---

अन्वयः—स्निग्धं च सौहृदहृतं च कुलोद्गतं च व्यायामयोग्यपुरुषं गुणार्जितं ( सर्वम् ) परैः क्रीतम् ( किम् ) गहनदुर्गतया प्रनष्टम् (किम्) युद्धे समस्तम् अतिभारतया विपन्नम् ( किम् ) ? ।

व्याख्या—सैन्यविषये शङ्कां विदधाति—स्निग्धं च = प्रभावानुरक्तं च, सौहृदेन हृतं सौहृदहृतं (सौहृदं नाम स्वामिनस्तद्विषयः स्नेहः, तेन हृतं = वशीकृतं)=स्नेहायत्तीकृतं, कुले=प्रशस्तकुले, उद्गतम् = जातम्–इति तथोक्तं कुलोद्गतं च = प्रशस्तवंशसमुद्भूतं च, व्यायामेन शारीरिकायासविशेषेण योग्याः शक्ताः पुरुषाः सादिनो यस्मिन् तत् तथाभूतं व्यायामयोग्यपुरुषं = शारीरिकश्रमकुशलान्वितं, गुणेन वाजिपरिचर्यानैपुण्यलक्षणेन निमित्तेन अर्जितम् संगृहीतम् इति गुणार्जितं=सद्गुणैः संगृहीतम् , च (सैन्यम्) परैः = रिपुभिः, क्रीतम्=उत्कोचादिभिः स्वायत्तीकृतम्, ( किम् ? इत्याशङ्कायाम् ) गहनदुर्गतया=काननदुर्गमतयाहेतुना, ( 'अटव्यरण्यं विपिनं गहनं काननं वनम्' इत्यमरः ) प्रनष्टं=इतस्ततो विशीर्णं किम् ? युद्धे=रणे, अतिभारतया=अरिपृतनाभिः साकं योद्धुमक्षमतया, समस्तं = अशेषं ( सैन्यं ) विपन्नम्=प्रनष्टं किमिति प्रश्नकाकुः । वसन्ततिलका नाम वृत्तमत्र । तल्लक्षणं यथा—'उक्ता वसन्ततिलका तभजाजगौगः' इति ॥ ६ ॥

यदि=चेत् , योधानां बलमिति योधबलं, समग्रयोधबलं परिवारो यस्य

---

स्नेहपूर्ण व्यवहार करनेवाली, स्वामी के सद्व्यवहार से स्वायत्तीकृत, सद्वंश में समुद्भूत, व्यायाम करने में समर्थ सद्गुणों के कारण संगृहीत सम्पूर्ण सेना शत्रुओं द्वारा उत्कोच आदि प्रदान कर खरीद ली गई ? अथवा विपिन के अत्यन्त गहन होने के कारण इतस्ततः बिखर गई अथवा वैरियों के वेग को सहन न करने के कारण नष्ट हो गई क्या ? ॥ ६ ॥

हंसक—यदि स्वामी सारी सेना के साथ होते, तो यह अनर्थ नहीं होता।

[ यदि समग्रयोधवलपरिवारो भवेद् भर्ता, नैव दोषो भवेत् । ]

यौग०—कथमसमग्रयोधबलपरिवारो नाम स्वामी ।

हंसकः—सुणादु अय्यो । [ शृणोत्वार्यः । ]

यौग०—अध्वश्रान्तो भवान् । आस्यताम् ।

हंसकः—अय्य ! तह । ( उपविश्य ) सुणादु अय्यो । सावसेसपच्चूसाए रअणीए वाहणसुहाए वेलाए वालुआतित्थेण णइं णम्मदं तरिअ वेणुवणे कलत्तं आवासिअ छत्तमत्तपरिच्छदेण गजजूहविमद्दजोग्गेण बलेण मग्गमदअणोए वोहाए णाअदण पआदो भट्टा । [ आर्य ! तथा । शृणोत्वार्यः सावशेषप्रत्यूषायां रजन्यां वाहनसुखायां वेलायां वालुकातीर्थेन

---

सः समग्रयोधवलंपरिवारः=अशेषपृतनाबलसमन्वितः, भवेत्=स्यात्, भर्ता=स्वामी, (तदा) नैव दोषः समुपस्थितोऽयं दोष नैवः भवेदिति ।

कथं=केन प्रकारेण, योधानां बलमिति योधबलं, न समग्रयोधबलं परिवारो यस्य सः असमग्रयोधबलपरिवारः = सम्पूर्णानीकशक्तिरहितः, स्वामी–भर्ता ।

आर्य ! इति सम्बोधनम्, शृणोतु = आकर्णयतु ।

अध्वनाश्रान्तः अध्वश्रान्तः=मार्गगमनक्लान्तः, (एतावता) आस्यताम्=समुपविश्यताम् ।

आर्य ! इति समुदाचारः । तथा = तेनप्रकारेण समुपविश्येति भावः । आर्यः=भवान् , शृणोतु=समाकर्णयतु, सावशेषप्रत्यूषायां=किञ्चिदवशिष्ट-उषःकालो यस्यां तस्याम्, रजन्यां= यामिन्यां, वाहनसुखायां=हयवारणादीनां कृते सुखदायिन्यां, वेलायां=काले, वालुकातीर्थेन = सिकतासंयुतेन प्रलिनेन, नदीं=सरितम् . नर्मदां=एतन्नामिकां तीर्त्वा=समुत्तीर्य, वेणुवने=एतन्नामके

---

यौग०—स्वामी सम्पूर्ण सेना के साथ क्यों नहीं थे ?

हंसक—आर्य ! सुनें ।

यौग०—आप मार्ग चलने के कारण थक गये होंगे, अतः बैठ जायें ।

हंसक—आर्य ! सुनें । थोड़ी रात अवशिष्ट रह जाने पर सवारियों के चलने योग्य आरामदायक समय में वालुकामय घाट से नर्मदा नदी को पार-

नदीं नर्मदा तीर्त्वा वेणुवने कलत्रमावास्य छत्रपरिच्छदेन गजयूथविमर्दयोग्ये वलेन मार्गमदन्या वीथ्या नागवनं प्रयातो भर्ता । ]

यौग०—ततस्ततः ।

हंसकः–तदो इसुक्खेवमत्तोत्थिदे सुय्ये एत्तिअमत्ताणि विअ जो णाणि गच्छिअ कोसमत्तेण विअ मदअंधीरपव्वदं अणासादिअ तड अग्गुक्खित्तं अद्धणिम्मिदसिलाकम्मं विअ विसमदंसणं विट्ठं णाअजूहं । [ तत इषुक्षेपमात्रोत्थिते सूर्ये एतावन्मात्राणीव योजनानि गत क्रोशमात्रेणेव मदगन्धीरपर्वतमनासाद्य तटाकपङ्कोत्क्षिप्तमर्धनिर्मितशिलाकर्म

---

विपिने, कलत्रं=स्त्रीम् , आवास्य=संस्थाप्य, छत्रमात्रपरिच्छदेन=आतप मात्रोपकरणेन, गजयूथविमर्दयोग्येन=वारणवृन्दमृगयार्हेण, [ 'मतङ्गजो ग नागः कुञ्जरोवारणः करी' इत्यमरः ] वलेन=अनीकेन, मृगाणां स मार्गम्, ततः मदयति=आनन्दयति—इति मार्गमदनीतया मार्गमदन्या हरिणव्रातहर्षदायिन्या, वीथ्या=वर्त्मना, भर्ता=स्वामी, प्रयातः=गतवान्

ततस्ततः=तदनन्तरम्, किमभूदित्याशयः ।

ततः = तदनन्तरम् , इषुक्षेपमात्रोत्थिते = प्रक्षिप्तो मार्गणो यावद् व्रजति तावन्मात्रोद्गते, सूर्ये=भगवति भास्करे, एतावन्मात्राणीव=अंगु विनिर्दिश्य निगदति. योजनानि=गव्यूतियुगम्, गत्वा=व्रजित्वा, क्रोशमा णैव=एकक्रोशपरिमितैव, मन्दगम्भीरपर्वतम्=एतन्नामकं शैलम्, अनासा अप्राप्य, तटाकपङ्कोत्क्षिप्तं=सरोवरकर्दमनिर्गतम् , अर्धं निर्मितं शिला मनशिलालेपो यस्य तत् तथाभूतम् अर्धनिर्मितशिलाकर्मेव=असमप्रा

---

कर वेणुवन में स्त्रीजन ठहराकर हाथी का शिकार करने योग्य थोड़ी सेना जिसके पास केवल छत्र ही था, लेकर स्वामी मृगों को प्रसन्न क वाले मार्ग से नागवन को गये ।

यौग०—तब क्या हुआ ?

हंसक—उसके वाद वाण फेंकने पर जितनी दूर जा सकता है, उ ऊँचे भगवान् भास्कर के चढ़ जाने पर तथा इतने ( हाथ से संकेत कर हुआ कहता है ) योजन जाने पर जब मदगन्धीर नामक पर्वत एक को

विषमदर्शनं दृष्टं नो नागयूथम् । ]

यौग०—ततस्ततः ।

हंसकः—तदो णिज्झाअन्तोसु सेणासु समुप्पण्णासङ्कापिण्डिदे तस्सिं जूहे इमस्स अणत्थस्स उप्पादओ कोच्चि पदादी भट्टारं एव्व उवट्ठिदो । [ततो निध्यायन्तीषु सेनासु समुत्पन्नशङ्कापिण्डिते तस्मिन् यूथेऽस्यानर्थस्योत्पादकः कश्चित् पदातिः भर्तारमेवोपस्थितः । ]

यौग०—तिष्ठ । इतः क्रोशमात्रे मल्लिकासालप्रच्छादितशरीरो

---

मनःशिलाशिल्पमिव, कृष्णदेहे संसक्तश्वेतकर्दमानां मनःशिलाभिरुत्प्रेक्षाऽत्र । विषमदर्शनं=भीषणदर्शनं, नागानां यूथम् इति नागयूथं = गजवृन्दं, नः = अस्माभिः, दृष्टं=समवलोकितम् ।

ततस्ततः=तदनन्तरं किमभूदित्याशयः । ततः=तदनन्तरं, निध्यायन्तीषु= निर्वर्णयन्तीषु, सेनासु=पृतनासु, समुत्पन्नशङ्कापिण्डिते=सञ्जातभयेन संहृत्य-संस्थिते, तस्मिन्=पूर्वोक्ते, यूथे=समूहे, अस्यानर्थस्य=स्वामिग्रहणस्य, उत्पादकः=हेतुभूतः, कश्चित् पदातिः=अज्ञातनामा पादसंचारणशीलः, भर्तारमेव= स्वामिनोऽन्तिकं, उपस्थितः=सम्प्राप्तः ।

तिष्ठ=विरम, इतः—अस्मात् स्थानात् , क्रोशमात्रे=क्रोशैकपरिमिते दूरे, मल्लिकयालताविशेषेण सालेन वृक्षविशेषेण च प्रच्छादितं शरीरं यस्य सः मल्लिकासालपुच्छादितशरीरः = मल्लिकासालवेष्टितदेहः, नखदन्तवर्जम् =

---

रह गया तव तडाग के कीचड़ से निकला हुआ भयानक हाथियों का समूह जिसे देखने से प्रतीत होता था कि इनके शरीरों पर आधे भाग में मैनशिल का लेप किया हुआ है, दिखाई पड़ा ।

यौग०—तव पुनः क्या हुआ ?

हंसक—जब सेना ध्यानपूर्वक निरीक्षण कर रही थी, उस समय सारा गजसमूह भय से पिण्डीभूत ( निष्क्रिय ) हो गया था। उसी समय इस ( स्वामी का पकड़ा जाना ) अनर्थ को सम्पादित करने वाला कोई पैदल स्वामी के पास आया ।

यौग०—अच्छा, क्या तुम यही कहोगे कि यहाँ ये एक कोस की

नखदन्तवर्जमेकनीलो हस्ती मया दृश्यत इत्युक्तवान् ननु ।

हंसकः–कह वरिण्णादं खु एदं अय्येण । जागत्ति खु समुप्पणो अअं दोसो [ कथं परिज्ञातं खल्वेतदार्येण । जाग्रति खलु समुत्पन्नोऽयं दोषः । ]

यौग०—हंसक ! जाग्रतोऽपि बलवत्तरः कृतान्तः । ततस्ततः ।

हंसकः–तदो सुवण्णसदप्पदाणेण तं णिसंसं पडिपूजिअ भट्टिणा उत्तं-अत्थि एसो चक्कवट्ठी हत्थी णीलकुवलअतणू णाम हत्थिसिक्खाए पठिदो । ता अप्पमत्ता होह तुम्हें इमस्सिं जूहे । गअं तं अहं वीणादुदीओ आणेमि त्ति । [ ततः सुवर्णशतप्रदानेन तं नृशंसं प्रतिपूज्य भर्त्रोक्तम्-

---

नखदशनरहितम् , एकनीलः=नीलवर्णान्वितैकः, हस्ती=गजः, मया=आगन्तुकेन, अदृश्यत=संदृष्टम् , इति=एवंप्रकारेण, उक्तवान्=कथितवान् , ननु = निश्चयेन ।

कथं=केनप्रकारेण, परिज्ञातं=विज्ञातं, खलु = निश्चयेन, एतद्=इदम् , आर्येण=भवता । जाग्रति – सावधाने सति, खलु=नूनं, समुत्पन्नः=समुद्भूतः, अयं दोषः=अयं स्वामिग्रहणापराधः ।

हंसक !–इति सम्बोधनम् , कृतान्तः = कालः, विधिर्वा, जाग्रतोऽपि = पुरुषकारं कुर्वाणादपि, बलवत्तरः=अतिशयेन बलवान् , अस्तीति शेषः ।

ततः = तदनन्तरं, सुवर्णस्य शतमिति सुवर्णशतम्, तस्य प्रदानं, तेन सुवर्णशतप्रदानेन = शतसंख्याककनकमुद्राग्राहयता, तं = पूर्वोक्तं, नृशंसं क्रूरं, दयाशून्यं, प्रतिपूज्य=प्रसादयित्वा, भर्त्रा = स्वामिना, उक्तं = निगदितम् ।

---

दूरी पर मल्लिका तथा सालवृक्ष से आच्छादित गात्र वाला दन्त और नाखूनों से वर्जित एक नीला हाथी दिखाई पड़ा है, ऐसा कहा ।

हंसक—इस बात की जानकारी आपको कैसे हुई ! इतना सावधान रहने पर भी यह अनर्थ कैसे हो गया ।

यौग०—हंसक ! उपाय करने वाले से भी बढ़कर भवितव्यता बलवती होती है । तब क्या हुआ ?

हंसक—तदनन्तर सौ सुवर्णमुद्रा प्रदान कर उस नृशंस को सन्तुष्ट कर स्वामी ने उससे कहा कि इस प्रकार के नीले रंग के श्रेष्ठ हाथी का वर्णन

अस्त्येष चक्रवर्ती हस्ती नीलकुवलयतनुर्नाम हस्तिशिक्षायां पठितः। तद् अप्रमत्ता भवत यूयमस्मिन् यूथे। गजं तमहं वीणाद्वितीय आनयामीति। ]

यौग०—अथ कथमुपेक्षितस्तदानीं स्वामी रुमण्वता।

हंसकः—णहि णहि पसादिअ भट्टा अमच्चेण विण्णाविदो—णहु दे एलावणादीणं वि दिसागआणं गहणं ण सम्भावणीअं। अविदु दुरारक्खदाए पच्चन्तवासी जणो। ता पदादिमत्ताहिट्ठिदं इमं जूहं करिअ सव्व एव्व गच्छामो, ण एक्काइणा सामिणा गन्तव्वं त्ति। [ नहि नहि। प्रसाद्य भर्तामात्येन विज्ञापितः—न खलु ते ऐरावणादीनामपि दिग्गजानां ग्रहणं न सम्भावनीयम्। अपि तु दुरारक्षतयासन्नदोषाणि विषयान्तराणि।

---

अस्ति=विद्यते, एष चक्रवर्ती=इत्थम्भूतः श्रेष्ठः, हस्ती = दन्ती, नीलकुवलयतनुः=नीलारविन्दशरीरो, नीलगजो नाम, हस्तिशिक्षायां=दन्तावललक्षणशास्त्रे पठितः=पठितवानस्मि, तत्र वर्णितो विद्यत इति भावः। तद्=तस्माद्धेतोः, यूयं=भवन्तः, अप्रमत्ताः=सावधानाः, भवत=भवन्तु, अस्मिन् यूथे=अस्मिन् गजवृन्दे। तं गजं=पूर्वोक्तं नीलहस्तिनम्, अहं = वत्सराजः, वीणाद्वितीयः=वीणासहायः सन्, आनयामि=आनयिष्यामि। सैन्यसाहाय्यं विनैव वीणावादनेनैव आनयिष्यामीति भावः।

अथ=एतदनन्तरं, कथं=केन प्रकारेण, उपेक्षितः=तिरस्कृतः, तदानीं=तस्मिन् समये, स्वामी = प्रभुः, रुमण्वता = एतन्नामकेनाऽमात्येन।

नहि नहि=मैवं, मैवं, अमात्येन=रुमण्वता, प्रसाद्य=तोषयित्वा, भर्ता=स्वामी, विज्ञापितः=निवेदितः, न खलु=नूनं, ते=भवत्कृते, ऐरावणादीनामपि=ऐरावतप्रभृतीनामपि, दिग्गजानां=दिग्दन्तावलानां, ग्रहणं = स्वायत्तीकरणं, न सम्भावनीयम्=असम्भवं नास्ति। अपितु=किन्तु, दुरारक्षतया=

---

गजलक्षण शास्त्र में पढ़ा है। अतः आप गजसमूह के लिये सावधान हो जांय। मैं उस हाथी को अपनी एकमात्र वीणा की सहायता से पकड़ लूँगा।

यौग०—उस समय रुमण्वान् ने स्वामी को ऐसा करते देख क्यों इसकी उपेक्षा की ?

हंसक—नहीं, नहीं। उस समय अमात्य ने स्वामी से नम्रतापूर्वक कहा कि आपके लिये ऐरावत सदृश दिग्गजों को भी पकड़ना कोई दुष्कर कार्य

तत्र निर्लज्जो निरभिजनः प्रत्यन्तवासी जनः तत् पदातिमात्राधिष्ठितमिदं यूथं कृत्वा सर्व एव गच्छामः, नैकाकिना स्वामिना गन्तव्यमिति । ]

यौग०—अपि महाजनसमक्षमेवमुक्तः स्वामी रुमण्वता ! एवमप्यवक्तव्यां स्वामिभक्तिमिच्छामि । ततस्ततः ।

हंसकः—तदो अत्तजीविदणिद्दिट्ठेण सवहेण णिवारिअ अमच्चं णीलबलाहआदो हत्थिणो ओदरिअ सुन्दरपाडलं णाम अस्सं आलुहिअ अणद्धागए सुय्ये विसदिमत्तहि पदादिहि सह पआदो भट्टा । [ तत

---

कष्टेन संरक्षतया, आसन्नदोषाणि=सन्निहितानर्थानि, विषयान्तराणि = दूरदेशानि, तत्र=तस्मिन् स्थाने, निर्लज्जः = त्रपारहितः, निरभिजनः=दुष्कुलः, प्रत्यन्तवासीजनः=अनार्यदेशीयो मानवः । तत्=तस्मात्, पदातिमात्राधिष्ठितम्–पदातिपृतनासंरक्षितम्, इदं=सन्निकृष्टवर्ति, यूथं = समूहं, कृत्वा=विधाय, सर्वे=वयम् , एव=निश्चयेन, गच्छामः=चलिष्यामः, नैकाकिना=जनविरहिता भवता न, स्वामिना=प्रभुणा, गन्तव्यमिति=यातव्यमिति ।

अपि=किम् , महाजनसमक्षम् = परिजनवृन्दसम्मुखम् , एवम् = इत्थम्, उक्तः = कथितः, स्वामी = प्रभुः, रुमण्वतः तन्नामकेन सचिवेन, एवमपि = इत्थमपि, अवक्तव्यां = निन्दारहिताम् . उत्तमाम् , स्वामिभक्तिम् = प्रभौ प्रीतिम् , इच्छामि=अभिलषामि । ततस्ततः=तदनु किं संजात इत्याशयः ।

ततः=पश्चात् आत्मजीवितनिर्दिष्टेन=स्वकीयं जीवनं विनिर्दिश्य विहि-

---

नहीं है, किन्तु दूसरे देश में रक्षा कठिनाई से होने के कारण वे भयास्पद होते हैं । सीमा प्रान्त के रहनेवाने लोग निर्लज्ज तथा दुष्ट हैं । अतः इस यूथ की देख-भाल के लिये केवल पदाति सेना को छोड़कर हम सब लोग आपके साथ चलेंगे । स्वामी को अकेले नहीं जाना चाहिए ।

यौग०—रूमण्वान ने यह बात परिजनों के समक्ष स्वामी से कही होती तो उत्तम होगा । मैं तो इस प्रकार की भी स्वामी भक्ति को निन्दा रहित समझता हूँ । तब, फिर क्या हुआ ?

हंसक—तदनन्तर स्वामी ने अपने प्राणों की शपथ देकर अमात्य को रोक दिया और स्वयं नीलबलाहक नामक हाथी से उतरकर 'सुन्दर पाटल'

आत्मजीवितनिर्दिष्टेन शपथेन निवार्यामात्यं नीलबलाहकाद्हस्तिनोऽवतीर्य-सुन्दर-पाटलं नामाश्वमारुह्यानर्घागते सूर्ये विंशतिमात्रैः पदातिभिः सह प्रयातो भर्ता । ]

यौग०—विजयाय । हा धिक् स्नेहात् पूर्ववृत्तान्तो नावेक्षितः । ततस्ततः ।

हंसकः—तदो दिउणं विअ अद्धाणं गच्छिअ साललुक्खच्छाआए सवण्णणट्ठणीलदाए परुभासिदेहि असरीरविणिक्खित्तेहि विअ दन्त-जुअलेहि सूइदो धणुसदमत्तण विअ दिअ दिट्ठो सो दिव्ववारणपडि-च्छन्दो । [ ततोद्विगुणमिवाध्वानं गत्वा सालवृक्षच्छायायां सावर्ण्यनष्ट

---

तेन, शपथेन=शयनेन, ( 'शपनं शपथः पुमान्' इत्यमरः) निवार्य =निषेध-यित्वा, अमात्यं=सचिवं, नीलबलाहकाद्=एतन्नामकात् , हस्तिनः=गजात् , अवतीर्य=नीचैरवरोहणं विधाय, सुन्दरपाटलं=एतन्नामकम् , अश्वम्=वाजि-नम्, आरुह्य=आरोहणं विधाय, अनर्घागते=किञ्चित् उदिते, सूर्ये=भास्करे, विंशतिमात्रैः=केवलं विंशतिसंख्याकैः पदातिभिः=चरणचारिभिः, सह=साकं, प्रयातः=गतः, भर्ता=स्वामी वत्सराजः ।

विजयाय=विजयलाभाय, हा धिक् = खेदे, स्नेहात्=गजग्रहणकौतुकात् , औत्सुक्याद् वा, पूर्ववृत्तान्तः = विगतवृत्तान्तः, न = नहि, अवेक्षितः=संचि-न्तितः । ततस्ततः=तदनन्तरं किमभूदित्याशयः ।

ततः=तदनन्तरं, द्विगुणं=द्विगुणितम् , इव=यथा, अध्वानम् = मार्गं, गत्वा = यात्वा, सालवृक्षच्छायायां=एतन्नामकमहीरुहानातपे, सालवृक्षच्छा-यया यत् सावर्ण्यं समानवर्णत्वं तेन नष्टः विविच्याग्रहीतः नीलः देहगतो नीलगुणो यस्य, तस्य भावः तत्ता, तया सावर्ण्यनष्टनीलतया=समानवर्णत्वेन

---

नामक अश्व पर चढ़कर भगवान् भास्कर के थोड़ा सा उदित होने पर केवल बीस पैदलों के साथ चले गये ।

यौग०—विजय के लिये । हाय, धिक्कार है, हाथी के पकड़ने की उत्कण्ठा में स्वामी ने पुरानी बातों का स्मरण नहीं किया । अच्छा, फिर क्या हुआ ?



हंसक—तब द्विगुणित वेग से मार्ग को पारकर अर्थात् वहाँ तक चलने

नीलतया प्रोद्भासिताभ्यामशरीरविनिक्षिप्ताभ्यामिव दन्तयुगलाभ्यां सूचि[illegible] धनु:शतमात्रेणेव दृष्टः स दिव्यवारणप्रतिच्छन्दः । ]

यौग०—हंस! अस्मत्परिताप इत्युच्यताम् । ततस्ततः ।

हंसकः-तदो भट्टिणा ओदरिअ अस्सादो आअमिअ देवदाण पणा[illegible] करिअ गहीदा वीणा । तदो पिट्ठदो एक्वकिदणिच्चओ विअ महन्[illegible] कण्ठीरवो समुप्पण्णो । [ ततो भर्त्रावतीर्याश्वादागम्य देवतानां प्रणा[illegible] कृत्वा गृहीता वीणा । ततः पृष्ठतः एककृतनिश्चय इव महान् कण्ठीर[illegible] समुत्पन्नः ]

---

नीलवर्णान्तर्हिततया, प्रोद्भासिताभ्यां = चाकचिक्यान्विताभ्याम्, शरीरे[illegible] विनिक्षिप्तम्, इति शरीरविनिक्षिप्तम्, तत्र न भवतीति अशरीरविनिक्षि[illegible] प्तम् ताभ्याम् अशरीरविनिक्षिप्ताभ्याम्=शरीरविनाभावेन निवेशिताभ्याम् इव=यथा, दन्तयुगलाभ्यां=दशनयुगलाभ्यां, सूचितः = विज्ञापितः, धनुःशत[illegible] मात्रेणेन = शतसंख्याककोदण्डपरिमितेनाऽध्वना, दृष्टः = अवलोकितः, दिव्य[illegible] वारणप्रतिच्छन्दः=दिव्यगजप्रतिकृतिः ।

हंस ! इति सम्बोधनम्, अस्मत्परितापः = अस्मद्दुःखकारणम्, इति[illegible] एवं प्रकारेण, उच्यताम्=कथ्यताम् । ततस्ततः=तदनु किं संजातम् ।

ततः=पश्चात्, भर्ता=स्वामी, अवतीर्य=नीचैरवरोहणं विधाय, अश्वात्[illegible] घोटकात्, आगम्य=आगत्य, देवतानां = सुराणां, प्रणामं = पादाभिवन्दनं कृत्वा=विधाय, गृहीता=स्वहस्ते नीता, वीणा = वल्लकी । ततः=तदनन्तरं

---

में जितना समय लगता, उससे आधे समय में ही वहाँ पहुँचकर सालवृक्ष की छाया में सौ धनुष की दूरी से ही, सालवृक्ष की छाया के कारण जिसके शरीर का नीला रंग उस छाया में छिप गया था और जिसका शरीर तो नहीं केवल चमकते हुए दाँत दिखाई पड़ते थे, ऐसे दिव्य हाथी की प्रतिकृति दिखाई पड़ी ।

यौग०—हंसक ! हमलोगों के दुःख का हेतु, ऐसा कहो । फिर क्या हुआ ?

हंसक—तब स्वामी ने घोड़े से उतर कर देवताओं को प्रणाम करने के अनन्तर वीणा धारण की । उसी समय एक बहुत बड़ा सिंह वहाँ उपस्थित

यौग०—कण्ठीरव इति। ततस्ततः।

हंसकः—तदो कण्ठीरवपरिञ्ञाणणिमित्तं परिवुत्ता अ वअं। महामत्तोत्तराउहीआहिट्ठिदो पच्चुग्गदो सो किदअहत्थी। [ ततः कण्ठीरवपरिज्ञाननिमित्तं परिवृत्ताश्च वयम्। महामात्रोत्तरायुधीयाधिष्ठितः प्रत्युद्गतः स कृतकहस्ती। ]

यौग०—ततस्ततः।

हंसकः—तदो णामगोत्तग्गहणेन समस्सासिह कुलवुत्तजणं सव्वहा पज्जोदप्पओओ एसो, अणगच्छह मं, अहं दाणि परस्स उवण्णासं

---

पृष्ठभागतः, एकं नीलहस्तिना समानं यथा भवति तथा कृतः निश्चयः फलाध्यवसायो यस्य सः, तथाभूतः एककृतनिश्चयः = वारणसमानफलाभिसन्धिप्रवर्तितः, इव=यथा, महान्=विशालः, कण्ठीरवः = पञ्चाननः, समुत्पन्नः = प्रादुर्भूतः।

कण्ठीरव इति=सिंह इति, ततस्ततः = तदनन्तरं किमभुदित्याशयः।

ततः=तदनन्तरं, कण्ठीरवज्ञाननिमित्तं=सिंहपरिज्ञानार्थम्, महामात्रोत्तरैः गजाध्यक्षप्रधानैः, आयुधीयैः योधैः अधिष्ठितः गर्भितः सः महामात्रोत्तरायुधीयाधिष्ठितः-हस्तिपकप्रमुखयोधासमन्वितः, सः=पूर्वोक्तः कृतकहस्ती=कृत्रिमगजः, प्रत्युद्गतः=प्रतीतिगतः।

ततस्ततः=तदनन्तरं किमभूदित्याशयः।

ततः=पश्चात्, नामगोत्रग्रहणेन=एकैकनामगोत्रनिर्देशवताभिसम्बोधनेन

---

हुआ, मानो उसका भी वहीं कार्य था, जो उस नीले हाथी का था।

यौग०—सिंह! तब, तब।

हंसक—तब सिंह के ज्ञान के निमित्त हम लोग लौटे। तब कृत्रिम हाथी कुक्षिसे अस्त्रधारी सैनिक गण, जिनका मुखिया उसका महावत था, निकले। उसके पेट से योधाओं के निकलने के कारण यह बनावटी हाथी है, ऐसा हमलोगों के द्वारा जाना गया।

यौग०—तब, फिर क्या हुआ?



हंसक—तब स्वामी ने श्रेष्ठ कुलोत्पन्न अपने अनुयायियों को एक-एक

विसमारम्भ परक्कमेण समीकरोमि त्ति भणिअ भट्टा पविट्ठो एव्व परबलं । [ ततो नाम-गौत्रग्रहणेन समाश्वास्य कुलपुत्रजनं सर्वथा प्रद्योत प्रयोग एषः, अनुगच्छत माम्, अहमिदानी विषमारम्भं परस्योपन्यासं पराक्रमेण समीकरोमीति भणित्वा भर्ता प्रविष्ट एव तत् परवलम् ।

यौग०—प्रविष्ट इति । अथवा ननु स्थाने,

ब्रीलितो वञ्चना प्राप्य मानी सत्त्वमुपाश्रितः ।
शूरश्चैकायतस्थश्च कियन्यत् प्रतिपद्यते ॥ ७ ॥

---

समाश्वास्य=आश्वासनं दत्त्वा, कुलप्रजननम्=कुलोत्पन्नात्मसहायभूतमभिजातपुरुषवर्गम् , सर्वथा=सर्वप्रकारेण, प्रद्योतप्रयोगः=प्रद्योतकपटः, एषः=अयम् , अनुगच्छत=अनुसरत, माम्=वत्सराजम्, अहम्=वत्सराजः, इदानीम्=अस्मिन् समये, विषमः आशङ्कनीयानर्थः आरम्भो यस्य तम् इति विषमारम्भम्=प्रतिकूलफलम्, परस्य=शत्रोः, उपन्यासं=छलप्रयोगं पराक्रमेण=स्वशौर्येण, न समः असमः, असमं समं करोमीति समीकरोमि=अनुकूलं कुर्वे इति=एवंप्रकारेण, भणित्वा=निगद्य, भर्ता=स्वामी वत्सराजः, प्रविष्ट एव तत् परवलम्=रिपुसैन्यम् ।

प्रविष्ट इति=रिपुसेनायां सम्प्रविष्ट इति । अथवा=वितर्के, ननु=निश्चयेन, स्थाने=समुचितम् इति, यतो हि—

अन्वयः—वञ्चनां प्राप्य व्रीलितः मानी सत्वमुपाश्रितः शूरः एकायनस्थः च अन्यत् किं प्रतिपद्यते ।

व्याख्या—वञ्चनां=प्रतारणां प्राप्य=आसाद्य, परैश्छलित इत्याशयः व्रीलितः=उपासमन्वितः, मानी=आत्माभिमानी, सत्वमुपाश्रितः=धैर्यसंयुतः

---

का नाम तथा गोत्र उच्चारण कर आश्वासन दिया और कहा कि यह सब प्रद्योत का कपट है। तुम सब मेरे पीछे-पीछे आओ। मैं इसी समय शत्रु के कपट को, जिसमें अनर्थ की आशंका है, अपने पराक्रम से दूर कर दूँगा। ऐसा कहकर स्वामी शत्रु की सेना में घुस पड़े।

यौग०-प्रविष्ट हो गये ! जाना उचित नहीं था अथवा उचित ही था। शत्रु से छले जाने पर अतएव लज्जित, स्वाभिमानी, पराक्रमी, शूर

ततस्ततः ।

हंसकः—तदो कीलाअमाणो विअ अत्तच्छन्दाणुवत्तिणा सुन्दर-पाडलेण अस्सेण अत्ताभिप्पाआदो वि अहिअं पहरन्तो आदिबहुकदाए परबलस्स अदिप्पउज्जमाणवाआमो विसण्णट्ठसव्वपरिजणो मए एक्काइणा, णहि णहि, भट्टिणा एव्व रक्खिअमाणो अणुबद्धदिवसजुद्ध-परिस्सन्तो बहुप्पहारणिपटिअ तुरओ तम्माअमाणसुय्यदारुणाए वेलाए मोहं गदो भट्टा । [ ततः क्रीडन्निवात्मच्छन्दानुवर्तिना सुन्दरपाट-लेनाश्वेनात्माभिप्रायादप्यधिकं प्रहरन् अतिबहुकतया परबलस्यातिप्रयुज्य-मानव्यायामो विषण्णनष्टसर्वपरिजनो मयैकाकिना, नहि नहि, भर्त्रैव

---

शूरः=बलवान् , एकम् अयनम् एकायनम् , तस्मिन् तिष्ठतीति एकायनस्थः= एकस्मिन् मार्गे संस्थितश्च अन्यत्=रिपुबलप्रवेशातिरिक्तं, किं=कीदृशं कर्म, प्रतिपद्यते=संश्रयते । अनुष्टुब्वृत्तमत्र । तल्लक्षणं यथा—

श्लोके षष्ठं गुरुर्ज्ञेयं सर्वत्रलघुपंचमम् ।
द्वितुर्यपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः इति ।। ७ ।।

ततस्ततः=तदनन्तरं किं संजातम् ।

ततः=पश्चात्, आत्मच्छन्दानुवर्तिना=स्वाभिप्रायानुसरिणा, सुन्दरपाटलेन =एतन्नामकेन, अश्वेन=वाजिना, क्रीडन्निव=क्रीडां कुर्वन्निव, आत्माभि-प्रायादप्यधिकं=स्वाभिलाषादति प्रभूतं, प्रहरन्=शत्रून् संहरन्, परबलस्य= रिपुपृतनायाः, अतिबहुलतया=अतिप्रभूततया, अतिप्रयुज्यमानो निजशक्ति-मतिक्रम्य विधीयमानः, व्यायामः शारीरिकायासो येन सः तथोक्तः अतिप्र-युज्यमानव्यायामः=कृतप्रभूतपरिश्रमः, विषण्णाः नष्टाश्च सर्वे परिजनाः यस्य

---

तथा एक ही लक्ष्य को पूर्ण करने का इच्छुक, अर्थात् शत्रु को जीतने में तत्पर और करता ही क्या ? ।। ७ ।।

तब, फिर क्या हुआ ?

हंसक—तब, अपनी इच्छानुकूल चलने वाले सुन्दरपाटल नामक घोड़े से खेलता-सा अपनी अभिलाषा से अधिक लोगों को मारते हुए, बहुत परि-श्रम करने के कारण और शत्रु सेना अति अधिक होने से, मुझ अकेले से,

रक्षयमाणोऽनुबद्धदिवसयुद्धपरिश्रान्तो बहुप्रहारनिपतततुरगस्ताम्यत्सूर्यदारुणायां वेलायां मोहं गतो भर्ता । ]

यौग०—कथं मोहमुपगतः स्वामी । ततस्ततः ।

हंसकः—तदो जहासत्ति सण्णिहिदगहणुप्पाडिदाहिं अविण्णाअमाणजादीहिं कक्कसाहिं लदाहिं पाकिदो विअ सरीरअन्तणादो पहरिसिदो भट्टा । [ ततो यथाशक्ति सन्निहितगहनोत्पाटिताभिरविज्ञायमानजातिभिः कर्कशाभिर्लताभिः प्राकृत इव शरीरयन्त्रणात् प्रधर्षितो भर्ता । ]

---

सः विषण्णनष्टसर्वपरिजनः=खिन्नध्वस्ताशेषजनः मया=हंसकेन, एकाकिना=असहायेन, नहि नहि=मैवं मैवं, भर्त्रैव,=स्वामिदिष्टेनैव रक्ष्यमाणः=पाल्यमानः, अनुबद्धदिवसपरिश्रान्तः=सततरणपरिखिन्नः, बहुप्रहारेण निपतितः तुरगः अश्वो यस्य सः बहुप्रहारनिपतिततुरगः प्रभूतसंपातपतिताश्वः, ताम्यत्सूर्यदारुणायां=ग्लायद्भास्करभयङ्करायां, वेलायाँम्=समये, सायङ्काल इत्याशयः, भर्ता=स्वामी वत्सराजः मोहं गतः=मूर्च्छामधिगतवान् ।

कथं=केन प्रकारेण, स्वामी=वत्सराजउदयनः, मोहं=मूर्च्छाम्, उपगतः=संप्राप्तः । ततस्ततः=तदनन्तरं किमभूत् ?

ततो=तदनन्तरं,=यथाशक्ति=शक्तिमनतिक्रम्य, सन्निहितात गहनात् उत्पाटिताभिः इति सन्निहितगहनोत्पटिताभिः=सन्निकृष्टकाननोत्खातिताभिः, न विज्ञायमाना अविज्ञायमाना अविज्ञायमानाजातिः यासां ताः, ताभिः अविज्ञायमानजातिभिः अपरिचितजातिभिः, कर्कशाभिः=दृढाभिः, लताभिः=व्रततिभिः, प्राकृतः=सामान्यजनः इवयथा, शरीरयन्त्रणात्=गात्रबन्धनात्, प्रधर्षितः=सम्पीडितः, भर्ता=स्वामी वत्सराजः ।

---

नहीं, नहीं, अपने भाग्य से रक्षा पाते हुए निरन्तर युद्ध करने से परिश्रान्त होकर और बहुत चोट खाने के कारण घोड़े को पञ्चत्व प्राप्त होने पर सायंकाल की भयंकर बेला में जब सूर्य रक्त वर्ण हो रहे थे, स्वामी मूर्छित हो गये ।

यौग०—स्वामी मूर्छित हो गये क्या ? फिर, फिर ।

हंसक—तब शत्रु-सैनिकों ने समीप के जंगल से बड़ी और कठोर

यौग०—कथं प्रधर्षित : स्वामी ।

पीनांसस्य विप्रकृष्टपर्वमहतो नागेन्द्रहस्ताकृते-
श्चापास्फालिकरस्य दूरहरणाद् वाणाधिकारोपिणः ।
विप्राभ्यर्चयितुः श्रमेषु सुहृदां सत्कर्तुरालिङ्गनै-
र्न्यस्तं तस्य भुजद्वयस्य वलयस्थानान्तरे बन्धनम् ॥ ८ ॥

---

कथं=केन प्रकारेण, प्रधर्षितः=अभिभूतः, तिरस्कृतो वा, स्वामी=वत्सराजः ।

अन्वयः—पीनांसस्य विप्रकृष्टपर्वमहतः नागेन्द्रहस्ताकृतेः चापास्फालिकरस्य दूरहरणाद् वाणाधिकारोपिणः विप्राभ्यर्चयितुः श्रमेषु आलिङ्गनैः, सुहृदां सत्कर्तुः तस्य भुजद्वयस्य वलयस्थानान्तरे बन्धनं न्यस्तम् ।

व्याख्या—पीनांसस्य=पृथुलस्कन्धस्य व्यायामसंस्कृतग्रन्थेः, अतएव महतः प्राप्तोच्चयस्य, इति विप्रकृष्टपर्वमहतः=व्यायामेन समुन्नतनाडीकस्य, नागेन्द्रस्य हस्तस्य इव आकृतिः यस्य सः तस्य नागेन्द्रहस्ताकृतेः=दन्तीवरशुण्डाकारस्य, चापास्फालिनौ धनुर्व्यापारणशीलौ करौ हस्तौ यस्य सः तस्य चापास्फलिकारस्य = धनुर्व्यापारहान्तस्य, दूरहरणाद् = कोदण्डस्यातिकर्षणात्, वाणानाम् अधिकारोपिणः स्वशक्त्यतिक्रमेण आरोपयितुं चापे संधातुं शीलमस्येति तथाभूतस्य वाणाधिकारोपिणः=अतिशयशरसंधानशीलस्य, विप्राणाम् अभ्यर्चयितुः विप्राभ्यर्चयितुः = द्विजपूजकस्य, श्रमेषु = आयासश्लाघ्यकर्मसु, आलिङ्गनैः = मिथः संश्लेषैः, सुहृदाम् = कृतकर्मणाम्, मित्राणां वा, सत्कर्तुः=आर्चयितुः, तस्य = स्वामिनः उदयनस्य, भुजद्वयस्य = करयुगलस्य, वलयस्थानान्तरे = कङ्कणीये स्थानविशेषे प्रकोष्ठे, बन्धनं =

---

लताओं को जो पहचानी नहीं जाती थी, उखाड़कर और उससे स्वामी के शरीर को वाँधकर सामान्य जन की तरह पीड़ित किया ।

यौग०—स्वामी क्या पीड़ित हुए ?

माँसल कंधों से समन्वित, व्यायाम करने से उठी हुई नसों वाले, हाथी सूँड़ के समान आकार युक्त, तथा धनुष को चलाने में निपुण, एवं अधिक खींचकर वाण छोड़ने के कारण द्वारतक शरों को प्रेषित करने वाले, विप्रों

अथ कस्यां वेलायां प्रत्यागतप्राणः स्वामी ?

हंसकः—अय्य ! अवसिदावलेवेसु पावेसु । [ आर्य ! अवसितावले पापेषु । ]

यौग०—दिष्टचा ! शरीरं धर्षितं न तेजः । ततस्ततः ।

हंसकः—तदो पच्चाअदप्पाणं दाणि भट्टारं पेक्खिअ अणेण म मादा हदो अणेण मम पिदा अणेण मम सुदो मम वअस्सो अञ्ञहा भट्टिणो परक्कमं वण्णअन्ता सव्वदो अभिद्दुदा दे पावा [ त

---

व्रततिबन्धनं, न्यस्तम् = अभिनिवेशितम् । शार्दूलविक्रीडितं नाम वृत्त 'सूर्याश्वैर्मसजस्ततःसगुरवः शार्दूलविक्रीडितम् इति लक्षणत् ।। ८ ।।

अथ = अनन्तरं, कस्यां वेलायां=कस्मिन् काले, प्रत्यागताः प्राणाः य स प्रत्यागतप्राणः = चैतन्यसमन्वितः संजातः, स्वामी = भर्ता ?

आर्यं ! इति समुदाचारः, अवसितः परिसमाप्तः अवलेपः अविन स्वामिवन्धलक्षणो येषां तेषु अवसितावलेपेषु = आविनयावसानेषु, पापे पापकृत्सु, स्वामी प्रत्यागतप्राणः संजात इत्याशयः ।

दिष्टया = भागधेयेन, शरीरं = गात्रं, धर्षितं = अभिभूतं, न = नहि तेजः = शौर्यम्, ततस्ततः = तदन्तरं किमभूत् ?

ततः = तदनन्तरं, प्रत्यागतप्राणम्=चेतनासमन्वितं, इदानीम्=साम्प्र भर्तारं = स्वामिनं प्रेक्ष्य = समवलोक्य, अनेन = वत्सराजेन, मम भ्राता मम बन्धुः, हतः = मारितः, अनेन = नृपेण, मम पिता = मम जनकः, अनेन

---

के पूजक, श्रमसाध्य कार्यों में सफलता प्राप्त करने वालों को आलिङ्गित सत्कार करने वाले उस भूपति शिरोमणि के दोनों वाहुओं में कङ्कक स्थान पर बन्धन डाल दिया गया ।। ८ ।।

स्वामी को किस समय होश हुआ ?

हंसक—आर्य ! पापियों के इस क्रूरता के समाप्त हो जाने पर ।

यौग०—भाग्य से स्वामी का शरीर ही पीड़ित किया गया, उनका नष्ट नहीं हुआ ।

हंसक—तब स्वामी को होश में आया देखकर उन क्रूर पापियों

प्रत्यागतप्राणमिदानीं भर्तारं प्रेक्ष्यानेन मम भ्राता हतोऽनेन मम पितानेन मम सुतो मम वयस्य इति अन्यथा भर्तुः पराक्रम वर्णयन्तः सर्वतोऽभिद्रुतास्ते पापाः ]

यौग०—ततस्ततः।

हंसकः—अण्णं च दाणि अच्चरिअं अण्णोण्णाणुणएण तहिं एक्को ववसिदो अकय्यं कत्तुं। सो दक्खिणाहिमुहं परिवत्तिअ भट्टारं समरवाआमसंखोहिदाणि णिरुवआरं संखिविअ केसाणि पीडिअ करेण करवालं पहारवेगं उप्पादइदुकामो आधावन्तो। [ अन्यच्चेदानीमाश्चर्यम्। अन्योन्यानुनयेन तत्रैको व्यवसितोऽकार्यं कर्तुम्। स दक्षिणा-

---

उदयनेन, मम सुतः = मम तनयः, मम वयस्यः = मम मित्रम्, इति = एवंप्रकारेण, अन्यथा = अन्यविधिना, भर्तुः = स्वामिनः उदयनस्य, पराक्रमं = शौर्यं वर्णयन्तः = कथयन्तः, सर्वतः = समन्तात्, ते पापाः ते दुष्टाः अभिद्रुताः = समक्षमागताः।

ततस्ततः = पश्चात् किं संजातम्?

इदानीं=अस्मिन्नेव काले, अन्यत्=अपरम्, आश्चर्यम्=अद्भुतम्, संजातमिति शेषः। अन्योन्यस्य = परस्परस्य, अनुनयेन = कथनेन, (परस्परस्य सान्त्वनेन त्वं कुरु त्वं कुरु इति परस्परं प्रति तेषामेव प्रार्थनावाक्येन) अन्योन्यानुनयेन–मिथोऽनुरोधेन तत्र=तस्मिन् स्थाने, एकः=जनः, अकार्यम्=गर्हितं कर्म, कर्तुं=विधातुं, व्यवसितः = समुद्यतो बभूव, स=उद्यतो जनः,

---

'इसने मेरे भाई को मारा है, इसने मेरे पिता का बध किया है, इसने मेरे पुत्र को नष्ट किया है, इसने मेरे मित्र को सर्वदा के लिये पृथक कर दिया है इस प्रकार स्वामी के शौर्य को विभिन्न प्रकार से वर्णन करते हुए, चारों ओर से दौड़कर उनको घेर लिया।

यौग०—फिर क्या हुआ?

हंसक—दूसरी यह आश्चर्य की बात है। उन नृशंसों में से कोई एक परस्पर एक दूसरे के कहने के कारण जघन्य कृत्य करने को उद्यत हुआ। उसने स्वामी के मुँह को दक्षिण की ओर घुमाकर उनके केशों को, जो युद्ध

भिमुखं परिवर्त्य भर्तारं समरव्यायामसंक्षोभितान् निरुपचारं संक्षिप्य केशान् पीडयित्वा करेण करवालं प्रहारवेगमुत्पादयितुकाम अधावन् ]

यौग०—हंसक ! वृत्तान्तं तावदाधारय, यावदहमुच्छ्वसामि।

हंसकः—तदो लुहिलपडलपिच्छिलाए भूमीए सो णिसंसंओ सएण बेएण ओघट्टिदचलणो पडिहदारम्भो हदो पडिदो। [ ततो रुधिरपटलपिच्छिलायां भूमौ स नृशंसः स्वेन वेगेनावघट्टितचरणः प्रतिहतारम्भो हतः पतितः।

---

भर्तारं=स्वामिनं, दक्षिणाभिमुखं=सव्याभिमुखं, उत्ताशायितमपवर्तनेन दक्षिणाभिमुखं, विधायेत्याशयः परिवर्त्य=परिभ्राम्य, समरव्यायामात् संक्षोभितान् इति समरव्यायामसंक्षोभितान्=जन्योद्योगविस्तान्, निरुपचारं = माल्यालङ्कारादिविरहितं, केशान्=कचान्, संक्षिप्य=एकत्रीकृत्य, करेण = हस्तेन, करवालं —असिकं, पीडयित्वा=समादाय, प्रहारस्य वेगं प्रहारवेगम्, उत्पादयितुं कामः यस्य सः उत्पादयितुकामः, प्रहारवेगम् उत्पादयितुकामः इति प्रहारवेगमुत्पादयितुकामः=संहाराभिलाषुकः, आधावन्—वेगेन व्रजन्।

हंसक ! इति सम्बोधनम्, वृत्तान्तं=कथानकं, तावत् = तावत्कालपर्यन्तम्, आधारम् = मनाक् विरम, यावत् = यावत्कालपर्यन्तम्, अहं= यौगन्धरायणः, उच्छ्वसामि = श्वसिमि।

ततः तदनन्तरं, धावन्नेव समये, रुधिरस्य पटलमिति रुधिरपटलम्, रुधिरपटलेन पिच्छिलायामिति रुधिरपटलपिच्छिलायाम् = शोणितसमूहस्निग्धायाम्, भूमौ=पृथिव्यां, सः=पूर्वोक्तः, नृशंसः=क्रूरः, स्वेन=निजेन, वेगेन= जवेन, अवघट्टितौ चरणौ=यस्य सः अवघट्टितचरणः= स्खलितपादः, प्रतिहतः

---

के कारण इधर-उधर बिखर गये थे, समेटकर हाथ में तलवार लेकर प्रहार करने की इच्छा से दौड़ता हुआ—

यौग०—हंसक ! जब तक मैं साँस ग्रहण करूँ, तब तक रुक जाओ।

हंसक—तब दौड़ता हुआ वह रुधिरसमूह के कारण चिकनी पृथ्वी पर वह दुष्ट अपने ही वेग के कारण पैर के फिसल जाने से गिर पड़ा। इस प्रकार उसके सब प्रयत्न निष्फल हो गये।

यौग०—पतितः पाप एषः । भोः !

परचक्रैरनाक्रान्ता धर्मसङ्करवर्जितः ।
भूमिर्भर्तारमापन्नं रक्षिता परिरक्षति ॥ ९ ॥

हंसकः—तदो भट्टिणा पुढमं कुन्तप्पहारजणिदमोहो सालङ्काअणो णाम पज्जोदस्स अमच्चो 'मा खु मा खु साहसं'त्ति भणिअ तं देसं उवट्ठिदो । [ ततो भर्त्रा प्रथमं कुन्तप्रहारजनितमोहः शालङ्कायनो नाम प्रद्योतस्यामात्यो 'मा खलु मा खलु साहसमि'ति भणित्वा तं देशमुपस्थितः ।]

---

आरम्भो यस्य सः प्रतिहतारम्भः = विघ्नितयत्नः, हतः = भग्नाशः, सन् पतितः=ध्वस्तः ।

भोः = इति सम्बोधनम् , एष पापः=अयं दुष्टः, पतितः=ध्वस्तः ।

अन्वयः—परचक्रैः अनाक्रान्ता धर्मसङ्करवर्जिता रक्षिता भूमिः आपन्नं भर्तारं परिरक्षति ।

व्याख्या—परेषां शत्रूणां चक्रैः सैन्यैः इति परचक्रैः=रिपुपृतनाभिः न आक्रान्ता = अपीडिता, धर्माणां वर्णाश्रमसंबन्धिनां सङ्करेण व्यामिश्रणेन वर्जिता रहिता इति धर्मसङ्करवर्जिता = वर्णसङ्करशून्या, रक्षिता=पालिता, भूमिः=पृथ्वी, आपन्नं=आपद्ग्रस्तं, भर्तारं=स्वामिनं, परिरक्षति = सर्वतोभावेन परिपालयति । अनुष्टुब्वृत्तमत्र—लक्षणं पूर्वमेवोक्तम् ॥ ९ ॥

ततः=तदनन्तरं, भर्त्रा=स्वामिना, प्रथमं=सर्वप्रथमं, कुन्तस्य प्रहारेण जनितः मोहः यस्य सः कुन्तप्रहारजनितमोहः=भल्लप्रक्षेपेणमूर्च्छितः, शालङ्कायनो नाम = एतन्नामकः, प्रद्योतस्य = महासेनस्य, अमात्यः = सचिवः, 'मा खलु साहसं=न खलु न खलु एतादृशं क्रूरं कर्म कुरु' इति = एवंप्रकारेण, भणित्वा = उक्त्वा, तं देशम् = तत्र, उपस्थितः सम्प्राप्तः ।

---

यौग०—दुष्ट अपने पाप से ही गिर पड़ा ।

शत्रु सेना से अपीड़ित, धर्मसङ्कर ( वर्ण साङ्कर्य ) से रहित यह वत्सराज की वसुन्धरा जो राजा से रक्षित है, विपत्ति में पड़े हुए अपने स्वामी की रक्षा कर रही है ॥ ९ ॥

हंसक—तब कुन्त ( भाले ) के प्रहार जो पहले मूर्छित था, वही प्रद्योत का शालङ्कायन नामक मन्त्री 'ऐसा मत करो' यह कहता हुआ, जहाँ स्वामी बँधे पड़े थे, वहाँ आ पहुँचा ।

यौग०—ततस्ततः ।

हंसकः—तदो तक्कालदुल्लहं पणामं करिअ सरीरअन्तणादो मोइदो भट्टा। [ ततस्तत्कालदुर्लभं प्रणामं कृत्वा शरीरयन्त्रणात् मोचितो भर्ता । ]

यौग०—विमुक्तः स्वामी । साधु भोः शालङ्कायन ? साधु । अवस्था खलु नाम शत्रुमपि सुहृत्त्वे कल्पयति । हंसक ! व्यसनात् किञ्चिदुच्छ्वसितमेव मे मनः । अथ किं प्रतिपन्नं तेन साधुना ।

हंसकः—तदो तेण अय्येण अणेअं सोवआरं सन्तिवअणं भणि गाढबहुप्पहारदाए असमत्थो वाहणासर्गात्त खन्धसअणं आरोवि

ततस्ततः = तदनन्तरं किमभूत् ?

ततः = पश्चात्, तत्कालदुर्लभम्=तथाविधपरिभवानुभवावसरे दुष्प्राप्य प्रणामं कृत्वा=नमस्कारं विधाय शारीरयन्त्रणात् = गात्रबन्धनात्, तेन= अमात्येन, मोचितः = निर्मुक्तः करितः, भर्ता = स्वामी ।

विमुक्तः = निर्मुक्तः, स्वामी = भर्ता, साधु = सुष्ठु, भो शालङ्कायन इति सम्बोधनम्, अवस्था = दुर्दशा, खलु नाम = निश्चयेन, शत्रुमपि = अरि मपि, सुहृत्वे=मित्रत्वे, कल्पयति = प्रेरयति, हंसक ! इति सम्बोधनम् व्यसनात्=दुःखात्, किञ्चित्=स्तोकम्, उच्छ्वसितम् = श्वसितम्, इव यथा, मे=मम, मनः=चित्तम् । अथ=अनन्तरं, तेन = पूर्वोक्तेन, साधुना सज्जनेन, किं प्रतिपन्नम् = किं विहितम् ?

ततः = तदनन्तरं, तेन=पूर्वोक्तेन, आर्येण=शालङ्कायनेन, अनेकं = नै

यौग०—तब क्या हुआ ?

हंसक—तब उसने प्रणाम करके, जो कि उस समय अत्यन्त दुष्प्राप्य था इस शारीरिकबन्धन से स्वामी को छुटकारा दिलाया ।

यौग०—स्वामी मुक्त हो गये ? धन्य हो, शालङ्कायन धन्य हो । विपत्ति शत्रुओं के मन में भी मैत्रीभाव उत्पन्न कर देती है । हंसक ! मेरा मन दुःख से कुछ उन्मुक्त-सा हो गया है । तब उस सज्जन ने क्या किया ?

हंसक—तब वह सज्जन अनेकों उपचार युक्त शान्तिवचन कहकर उनको कन्धे से ढोई जानेवाली सवारी पालकी में बिठाकर उज्जयिनी

उज्जइणि एव्व णीदो भट्टा । [ ततस्तेनार्येणानेकं सोपचारं शान्तिवचनं भणित्वा गाढबहुप्रहारतयासमर्थो वाहनासन इति स्कन्धशयनमारोप्योज्जयिनीमेव नीतो भर्ता । ]

यौग०—नीतः स्वामी । एष सोऽनर्थः,

एतत् तद्व्यङ्गमस्माकमेष सोऽतिमनोरथः ।
प्रद्योतस्य मनस्वित्वात् स्वामी दुःखेषु वर्तते ॥ १० ॥

---

विधं, सोपचारं=उपचारान्वितं, शान्तिवचनं=शान्त्वनायुतगिरं, भणित्वा=प्रोच्य, गाढा दृढा बह्वश्च प्रहाराः अभिघाताः यस्य भाव स्तत्तातया गाढबहुप्रहारतया=गहनाधिकाभिघाततया, वाहनासदे=घोतकाद्यारोहणे, असमर्थः=अक्षमः, इति हेतोः, स्कन्धाशयनमारोप्य=स्कन्धवाह्यमुपवेश्य, उज्जयिनीं=महासेनराजधानीम्, एव=निश्चयेन, नीतः प्रापितः, भर्ता=स्वामी वत्सराजः ।

नीतः=गमितः, स्वामी=भर्ता, एषः=ग्रहीकृत्य स्वामिनो नयनम्, सोऽनर्थः=पूर्वतर्कितोऽनर्थः ।

अन्वय—एतत् तत् अस्माकं व्यङ्गम्, एष सः प्रद्योतस्य अतिमनोरथः, मनस्वित्वात् स्वामी दुःखेषु वर्तते ।

व्याख्या—एतत्=इदंकर्म, तत्=पूर्वतर्कितम्, अस्माकम्=नः, व्यङ्गचम्=अपमानजनकम्, एषः=पूर्वचिन्ततोऽनर्थः, पद्योतस्य=महासेनस्य, अतिमनोरथः=अभीप्सितार्थः, मनस्वित्वात्=धीरचित्तत्वात्, स्वामी=वत्सराज उदयनः, दुःखेषु=पराधीनोत्मकेषु व्यसनेषु, वर्तते=विद्यते । अनुष्टुब्वृत्तमत्र लक्षणं पूर्वमेवोक्तम् ॥ १० ॥

---

गया । क्योंकि स्वामी गहरी चोट के कारण घोड़े इत्यादि की सवारी पर बैठने में असमर्थ थे ।

यौग०—स्वामी को ले गया ? यह तो अनर्थ हुआ ।

स्वामी को पकड़कर ले जाना, यही तो हम लोगों के लिये अपमानजनक था और यही प्रद्योत का पूर्व विचारित अत्यन्त अभीष्ट मनोरथ था । स्वामी अपनी मनस्विता के कारण सब कष्ट पा रहे हैं ॥ १० ॥

अथ,

कथमगणितपूर्वं द्रक्ष्यते तं नरेन्द्रः
कथमपुरुषवाक्यं श्रोष्यते सिद्धवाक्यः ।
कथमविषयबन्ध्यं धारयिष्यत्यमर्षं
प्रणिपतति निरुद्धः सत्कृतो धर्षितो वा ॥ ११ ॥

( प्रविश्य )

प्रती०—अय्य ! एसा पडिसरा । [ आर्य ! एषा प्रतिसरा । ]

---

अन्वयः—नरेन्द्रः अगणितपूर्वं तं कथं द्रक्ष्यते, सिद्धवाक्यः अपुरुष-वाक्यं कथं श्रोष्यते, अविषयवन्ध्यम् अमर्षं कथं धारयिष्यति, निरुद्धः सत्कृतो धर्षितो वा प्रणिपतति ।

व्याख्या—नरेन्द्रः=भूपतिः वत्सराजः, अगणितपूर्वं=अवज्ञातपूर्वम्, अपरिचितमित्याशयः, तं=प्रद्योतं, कथं=केन प्रकारेण, द्रक्ष्यते=अवलोकयिष्यति, सिद्धवाक्यः=मङ्गलवचनः, अपुरुषवाक्यं= कापुरुषसाधारणगिरम्, कथं=केन प्रकारेण, श्रोष्यते=आकर्णयिष्यति, अविषयेण जयविषयाभावेनवन्ध्यं निष्फलम् इति अविषयवन्ध्यम्,=विजयाभावनिष्फलमनोरथम्, अमर्षं=कोपं, कथं=केन प्रकारेण, धारयिष्यति=स्वस्मिन् स्थापयिष्यति, निरुद्धः=प्रगृहीतो जनः, सत्कृतः=पूजितः, धर्षितः=तिरस्कृतः, वा प्रणिपतति=निरुद्धरि लज्जितो भवति। मालिनी नाम वृत्तमत्र='ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ॥ ११ ॥

( प्रविश्य=प्रवेशं विधाय )

आर्य ! इति समुदाचारः, एषा=इयं, प्रतिसरा=हस्तधार्यं रक्षासूत्रम् ।

---

राजा उस प्रद्योत को, जिसे उसने पहले कभी नहीं जाना है, किस प्रकार देखेगा ? सर्वदा मङ्गलवचनों को ही सुननेवाला अपमानजनक वाक्यों को किस प्रकार सुनेगा ? मनोरथ पूर्ण न होने के कारण उत्पन्न क्रोध को वह किस प्रकार धारण करेगा ? वन्दी बनाया हुआ पुरुष चाहे उसका आदर हो या चाहे निरादर हो, वह हमेशा लज्जित ही रहता है ॥ ११ ॥

( प्रविष्ट होकर )

प्रती०—आर्य ! यह प्रतिसरा है ।

यौग०—

एतानि तान्यापतितानि काले भाग्यक्षयान्निष्फलमुद्यतानि ।
तुरङ्गमस्यैव रणे निवृत्ते नीराजनाकौतुकमङ्गलानि ॥ १२ ॥

प्रती०—अय्य ? इमा पडिसरा । [ आर्यं इयं ! प्रतिसरा । ]

यौग०—विजये ! स्थाप्यताम् ।

---

अन्वयः—रणे निवृत्ते तुरङ्गमस्य नीराजनाकौतुकमङ्गलानि इव उद्यतानि एतानि तानि भाग्यक्षयात् काले निष्फलम् आपतितानि ।

व्याख्या—रणे=संग्रामे, निवृत्ते=परिसमाप्ते सति, तुरङ्गमस्य=अश्वस्य, नीराजना आरात्रिकाख्यम् आरोग्यबलाद्यर्थं युद्धात् प्राक् कर्तव्यं शान्तिकर्म, तदेव कौतुकम् उत्सवः, तस्य मङ्गलानि तदुपयोज्यानि दीपपुष्पादीनि मङ्गलद्रव्याणि इति नीराजनाकौतुकमङ्गलानि=आरार्तिकोत्सवमङ्गलद्रव्याणि, इव=यथा, उद्यतानि=यत्नसाधितानि, एतानि तानि=इमानि पूर्वप्रार्थितानि वस्तूनि, भाग्यक्षयात्=दैवप्रतिकूलत्वात् काले=समये व्यतीते सति, निष्फलम्=व्यर्थं यथा भवति तथा, आपतितानि=सम्भूतानि । इन्द्रवज्रा-उपेन्द्रवजयोः नभ्मिश्रणादुपजापजातिवृत्तमत्र । लक्षणं तु 'स्यादिन्द्रवज्रा यदि तौ जगौ गः', 'उपन्द्रवज्रा प्रथमे लघौ सा' 'अनन्तरोदीरितलक्ष्मभाजौ, पादौ यदीयावुपजातमस्ताः ॥ इति ॥ १२ ॥

आर्यं ! इति समुदाचारः, इयम्=एषा, प्रतिसरा=हस्तधार्यं रक्षासूत्रम् । विजये ! इति सम्बोधनम् , स्थाप्यताम्=निधाप्यताम् । किमिति, भर्तृमातरं=स्वामिजननीं, निवेदयामि=कथयामि ।

---

यौग०—जिस प्रकार रण के समाप्त हो जाने पर अश्व की नीराजना-विधि के लिये समुपस्थित की गई मङ्गल-सामग्रियाँ निरर्थक हो जाती है । उसी प्रकार हमलोगों के भाग्य क्षय हो जाने के कारण अर्थात् राजा के पकड़ लिये जाने पर इन सब प्रतिसरा आदि का मिलना भी निष्फल ही है ॥ १२ ॥

प्रती०—आर्य ! यह प्रतिसरा है ।

यौग०—विजये ! रख दो ।

प्रती०—किं त्ति भट्टिमादरं णिवेदेमि । [ किमिति भर्तृमातरं निवेदयामि । ]

यौग०—विजये ! एवमेतत् ।

प्रती०—किं एदं । [ किमेतत् । ]

यौग०—इदम् ।

प्रती०—भणादु भणादु अय्यो भणादु । [ भणतु भणत्वार्यो भणतु । ]

यौग०—अथवा नैतच्छक्यं परिहर्तुम् । निवेदयिष्याम्यत्र-भवत्यै । विजये ! स्थिरीक्रियतामात्मा । ( कर्णे ) एवमिव ।

प्रती०—हा ।

यौग०—विजया खल्वसि ।

प्रती०—एषा गच्छामि मन्दभाआ । [ एषा गच्छामि मन्दभागा । ]

---

भणतु भणतु=कथयतु कथयतु,

अथवा, एतत्=स्वामिवृत्तकथनम् . परिहर्तुं न शक्यम्=गोपायितुं न युक्तम् । अत्रभवत्यै-राजमात्रे निवेदयिष्यामि=कथयिष्यामि, विजये ! इति सम्बोधनम् , स्थिरीक्रियतामात्मा=धैर्यमाधीयताम् । विजया खलु असि सुप्रसिद्धधैर्या खलु भवसि,

---

प्रती०—स्वामी की माता से क्या निवेदन करूँ ?

यौग०—विजये ! इस प्रकार से ।

प्रती०—यह क्या ?

यौग०—यह—

प्रती०—कहिये, कहिये, आर्य ! कहिये ।

यौग०—अथवा इस बात को गुप्त रखना उचित नहीं है । स्वामी की माता से यह बताऊँगा । विजये ! आत्मा को सुदृढ़ करो ( कान में ) इस प्रकार ।

प्रती०—हाय !

यौग०—विजये ! तुम विजया हो, धैर्य धारण करो ।

प्रती०—मैं मन्दभागिनी जाती हूँ ।

यौग०—विजये ! न खलु त्वयात्र भवत्यै गृहीतः स्वामीति सहसा निवेदयितव्यम् । स्नेहदुर्बलं मातृहृदयं रक्ष्यम् ।

प्रती०—कहं दाणि णिवेदेमि । [ कथमिदानीं निवेदयामि । ]

यौग०—शृणु—

पूर्वं तावद् युद्धसम्बद्धदोषाः
प्रस्तोतव्या भावनाः संशयानाम् ।
सन्दिग्धेऽर्थे चिन्त्यमाने विनाशे
रूढे शोके कार्यतत्त्वं निवेद्यम् ॥ १३ ॥

---

विजये ! इति सम्बोधनम् , न=नहि, खलु=निश्चयेन, त्वया=भवत्या, अत्र भवत्यै=राजमात्रे, गृहीतः=बद्धः, स्वामी=भर्ता, इति=एवंप्रकारेण, सहसा=अकस्मात् , निवेदयितव्यम्=संसूचनीयम् । स्नेहेन = प्रेम्णा दुर्बलं निर्बलम् इति स्नेहदुर्बलम्=प्रेमनिर्बलम् , मातृहृदयं=जननीहृदयं, रक्ष्यम्=रक्षणीयम् ।

इदानीं=साम्प्रतं, कथं=केन प्रकारेण, निवेदयामि=कथयामि, शृणु=आकर्णय—

अन्वयः—पूर्वम् तावत् संशयानां भावनाः युद्धसम्बन्धदोषाः प्रस्तोतव्याः, संदिग्धेऽर्थे विनाशे चिन्त्यमाने शोके रूढे कार्यतत्त्वं निवेद्यम् ।

व्याख्या— पूर्वम्=तावत् सर्वप्रथमम्, संशयानां=सन्देहानां, भावनाः—उत्पादकाः, युद्धसम्बन्धदोषाः—रणसंभाविताऽनर्थाः, प्रस्तोतव्याः = वक्तव्याः, सन्दिग्धे = सशयान्विते, अर्थे=परिणामे, विनाशे = संहारे, चिन्त्यमाने =

---

यौग०—विजये ! अचानक जाकर राजमाता से यह न कह देना कि वे पकड़े गये हैं। पुत्र स्नेह से दुर्बल जननी के हृदय की रक्षा करनी चाहिये ।

प्रती०—इस समय किस प्रकार निवेदन करूँ ?

यौग०—सुनो—

सर्व प्रथम तो संशय को समुत्पन्न करनेवाले रण सम्बन्ध अनर्थों का वर्णन करना और जब वह मन में सन्देह कर विनाश की आशङ्का करने लगे,

प्रती०—घत्तिस्सं । [ ग्रहीष्यामि ! ] ( निष्क्रान्ता । )

यौग०—हंसक ! त्वमिदानीं स्वामिना किं न गतः ।

हंसक—अय्य ववसिदो खु अहं अत्ताणं अणुग्गहिदुं सालङ्काअ णिउत्तो गच्छ इमं वृत्तन्तं कोसम्बीए णिवेदेहि त्ति । [आर्य ! व्यव खल्वहमात्मानमनुग्रहीतुं सालङ्कायनेन नियुक्तः-गच्छेमं वृत्तान्तं कौश निवेदयति । ]

यौग०—किन्तु खल्विदानीं निराशस्यनुसारं कर्तुकामः उत स्निग्धपुरुषसन्निकर्षं परिहरति ।

---

विचार्यमाणे, शोके = दुःखे, रूढे = निमग्ने सति, कार्यतत्त्वं = स्वामिग्रह मिति वृत्तान्तं, निवेद्यम् = कथनीयम् । शालिनी नाम वृत्तमत्र 'माजौ चेच्छालिनी वेद लोकैः" इति लक्षणात् ॥ १३ ॥

ग्रहीष्यायि = इत्थमेव विधास्यामीति भावः ।

हंसक ! इति सम्बोधनम् , त्वम् = भवान्, इदानीम् = अधुना, स्वामिना भर्तृणा साकं, किं न गतः = किं न गतवान् ।

आर्य ! इति समुदाचारः, व्यवसितः = समुद्यतः, खलु = निश्चयेन, अह आत्मानमनुग्रहीतुम् = स्वाम्यनुगमनेन निजं कृतार्थयितुम् , ( तस्मिन्नेवकाले सालङ्कायनेन = एतन्नामकेनामात्येन, नियुक्तः = समादिष्टः, गच्छ-व्रज, इ वृत्तान्तं = कथानकमिदं, कौशाम्ब्यां, निवेदय = श्रावय इति ।

निर्गता आशा यस्मात् तं निराशं स्वामिना असंभवधिया अनाशंसि

---

तब शोक के बढ़ जाने पर मुख्य कार्य स्वामी का पकड़ा जाना यह निवेद करना ॥ १३ ॥

प्रती०—ऐसा ही करूँगी । ( निकल जाती है । )

यौग०—हंसक ! तुम इस समय स्वामी के साथ क्यों नहीं गये ।

हंसक—आर्य ! मैं स्वामी के साथ जाकर अपने को अनुगृहीत करने लिये उद्यत था, किन्तु अमात्य शालङ्कायन ने मुझे आज्ञा दी कि जाकर यह वृत्तान्त कौशाम्बी से निवेदन करो ।

यौग०—ऐसा उसने क्यों किया—क्या स्वामी के बचाने की ओर

हंसकः—अहइं। [ अथ किम् ]

यौग०—स स्वकं विस्मयादात्मानमाविष्करोति, उत सर्वारम्भ-सिद्धौ रमणीयं भवति। अथ मामन्तरेण स्वामी न किञ्चिदाह।

हंसकः—अय्य ! अत्थि, पदक्खिणीकरअन्तो भट्टारं अन्तज्जला-वगाढाए दिट्ठीए बहुकं सन्दट्ठुकामेण विअ म्हि भट्टिणा उत्तो-गच्छ।

जोअन्ध–[आर्य ! अस्ति, प्रदक्षिणीकुर्वन् भर्त्तारमन्तर्जलावगाढया दृष्ट्या सन्देष्टुकामेनेवास्मि भर्त्रोक्तः–गच्छ यौगन्ध–] ( इत्यर्धोक्ते तिष्ठति )

---

मित्याशयः, अनुसारम् = अनुकूलवृत्तिम् स्वामिक्षेमवार्ता प्रेषणात्मिकाम् कर्तुकामः=विधातुमभिलाषुकः = किन्तु खलु=निश्चयेन कर्तुमिच्छति–अभि-लषति, स्वामिप्रीत्यर्थमिति भावः, उताहो = अथवा, स्निग्धपुरुषसन्निकर्षं = प्रेमिपरिजनसान्निध्यं, परिहरति = निषेधयति ।

स=सालंकायनः, विस्मयात्=दर्पात्, स्वकं=निजसम्बन्धिनीम्, आत्मा-नम्=बुद्धिम् ( आत्मा पुंसि स्वभावे च प्रयत्नमनसोरपि। धृतावपि मनीषा-याम् इति मेदिनी ) आविष्करोति=प्रकाशयति। उत = अथवा, सर्वारम्भ-सिद्धौ = आशेषकार्यावसाने, रमणीयं भवति = प्रसन्नतामनुभवति। अथ = किम् ?, मामन्तरेण=मामुद्दिश्य, स्वामी = भर्ता, न = नहि, किञ्चिदाह = किञ्चिज्जगाद ?

आर्य ! इति समुदाचारः, अस्ति = विद्यते, निवेद्यवस्तु। प्रगतः दक्षि-णाम् प्रदक्षिणः, तं कुर्वन् प्रदक्षिणीकुर्वन् = प्रदक्षिणां विदधन् , भर्तारम् =

---

निराश होकर अथवा स्निग्ध (स्नेही), पुरुष को दूर करने की इच्छा से।

हंसक—और क्या !

यौग०—क्या वह अभिमान से अपनी बुद्धि का परिचय दे रहा है अथवा स्वामी के ग्रहण रूप कार्य सिद्ध होने पर आनन्दित हो रहा है। क्या स्वामी ने मेरे लिये कुछ नहीं कहा ?

हंसक—आर्य ! है। मैं जब स्वामी की प्रदक्षिणा कर चलने लगा तो उनके नयनों में जल भर आया, अतः बहुत कुछ कहने की अभिलाषा रखते हुए भी उन्होंने किसी प्रकार इतना ही कहा कि—'जाओ यौगन्धरायण'—

यौग०—स्वैरमभिधीयतां, स्वामिवाक्यमेतत् ।

हंसकः—जोअन्धराअणं पेक्खेहि त्ति । [यौगन्धरायणं प्रेक्षस्वेति ।

यौग०—मा तावत् । सर्वसचिवमण्डलमतिक्रम्यैको 'यौगन्धरायणं द्रष्टव्य इत्याह ।

हंसकः—अहइं [ अथ किम् । ]

यौग०—तेन हि अनर्हप्रतिक्रियमनिर्विष्टभर्तृपिण्डमनुपकृतराज

---

स्वामिनम् , अन्तर्जलावगाढया=अन्तर्बाष्पपूर्णया, दृष्ट्या = लोचनेन, वहुकं वहुमर्थम् , सन्दष्टुकामेन भर्त्रा = स्वामिना, अस्मि उक्तः । गच्छ = व्रज यौगन्ध··· । अर्थात् प्रास्थानिकप्रदक्षिणीकारवेलायां भर्त्रा वहुसन्देशवचनदित्सामाविष्कृतवतापि अबाष्पस्तब्धकण्ठतया तां सफलयितुमशक्नुवता कथञ्चिदेकमेव वाक्यमल्पं 'गच्छ यौगन्धरायणं पश्ये'त्येवमात्मकमभिहितमिति वाक्यार्थः ।

स्वैरं=निर्भयं यथेच्छम् , अभिधीयताम्=निगद्यताम् । स्वामिवाक्यमेतत्=भर्तृकथनमेतत् ।

यौगन्धरायणम्=एतन्नामानमात्यम् , प्रेक्षस्व=पश्य, इति ।

मा तावत्=मा खलु एवं कथयेति भावः, सर्वेषां सचिवानां मण्डलमिति सर्वसचिवमण्डलम्=अशेषामात्यवर्गम् , अतिक्रम्य=परित्यज्य, एकः=केवलं, यौगन्धरायणो द्रष्टव्यः, इत्याह=एवं जगाद ।

तेन हि=किम् , अनर्हप्रतिक्रियम्=अर्हप्रतिक्रियारहितम् , अनागतायामेव विपदि योग्यां प्रतिक्रियाम् अकृतवन्तमित्याशयः । अनिर्विष्टभर्तृपिण्डम् =

---

( इस प्रकार आधी बात कहकर रुक जाता है । )

यौग०—निर्भय होकर यथेच्छ कहो । यह तो स्वामी का कथन है ।

हंसक—यौगन्धरायण से भेंट करो ।

यौग०—ऐसी बात मत कहो । क्या सब मन्त्रियों को छोड़कर यौगन्धरायण अर्थात् मुझसे ही मिलने को कहा ?

हंसक—और क्या ?

यौग०—तो स्वामी मुझको जिसने विपत्ति पड़ने पर समुचित प्रतिकार

सत्कारं यदि खलु मां द्रष्टव्यं मन्यते स्वामी ।

हंसकः—वाहं । [ वाढम् ]

यौग०—पुरुषान्तरितं मां द्रक्ष्यति स्वामी,
रिपुनृपनगरे वा बन्धने वा वने वा
समुपगतविनाशः प्रेत्य वा तुल्यनिष्ठम्
जितमिति कृतबुद्धि वञ्चयित्वा नृपं तं
पुनरधिगतराज्यः पार्श्वतः श्लाघनीयम् ॥ १४ ॥

---

अनिर्विष्टं कुत्सितं यथा भवति तथा उपभुक्तः भर्तृपिण्डः स्वाम्यन्नं येन स तं तथाभूतम् अनिर्विष्टभर्तृपिण्डम्=दूषितस्वाम्यन्नम् अनुपकृतः = कुत्सितं यथा भवति तथा उपयुक्त. राजसत्कारः स्वामिकर्तृका पूजा येन तम् अनुपकृतराजसत्कारम्=अप्रतिक्रियान्वितभर्तृसम्मानम् । यदि खलु मां=यौगन्धरायणं, द्रष्टव्यं मन्यते स्वामी=भर्ता । वाढमिति स्वाकारेऽव्ययम् । पुरुषान्तरितं=पुरुषान्तरमिवाचरितं, परिगृहीतान्यपुरुषवेषमित्याशयः ।

अन्वयः—(स्वामी मां) रिपुनृपनगरे वा बन्धने वा वने वा समुपगतविनाशः तुल्यनिष्ठम् प्रेत्य वा (द्रक्ष्यति) जितमिति कृतबुद्धि तं नृपं वञ्चयित्वा पुनरधिगतराज्यः श्लाघनीयम् (मां) पार्श्वतः (द्रक्ष्यति) ।

व्याख्या—(स्वामी=वत्सराज उदयनः, मां=यौगन्धरायणं ) रिपुनृपनगरे=अरिभूपपुरे वा, बन्धने वा=कारागारे वा, वने वा=गहने वा, समुपगतः विनाशो यस्य सः समुपगतविनाशः दुःखातिभारात् प्रमीतः स्वामी, तुल्यनिष्ठं=समानावस्थं, प्रेत्य = यमनगर्यामित्याशयः. (द्रक्ष्यति) जितमितिकृतबुद्धिं=वत्सराजच्छलनेन मम विजयः सुनिश्चितः इति मन्यमानम् , तं=

---

नहीं किया तथा स्वामी के अन्न को खाकर और सत्कार ग्रहण कर उसका प्रतिदान नहीं चुकाया, देखना उचित समझते हैं ?

हंसक—हाँ ।

यौग०—अन्य वेष में रहूँगा, तब भी स्वामी मुझको देखेंगे—

स्वामी मुझको शत्रुओं के राजा की नगरी में, कारागार में तथा वन में अपने पास ही पावेंगे, मरने पर भी स्वामी मुझको मरा हुआ परलोक में

( नेपथ्ये )

हा हा भट्टा ! [ हा हा भर्तः ! ]

यौग०—

एष शोकप्रतीकारो यथाशक्ति निवेद्यते ।
एतत् स्त्रीभिरसामर्थ्यं मन्त्रिणामनुवर्ण्यते ॥ १५ ॥

---

पूर्वोक्तं, नृपं = भूपं, प्रद्योतम् , वञ्चयित्वा = नैकविधैरुपायैश्छलयित्वा पुनः = भूयः, अधिगतराज्यः = प्राप्तराज्यस्तु भर्ता, श्लाघनीयं = प्रशंसनीयं ( मां=यौगन्धरायणं ) पार्श्वतः = स्वपार्श्वे, ( द्रक्ष्यतीति शेषः ) वेषान्तरप्रच्छन्नरूपोभूत्वा रिपुनगरादौ स्वामिना समागन्तुं, प्राणपरित्यागेनापि स्वामिनमनुवर्तितुम् , कपटोपायप्रयोगेन शत्रुहस्तात् स्वामिने मोचयितुं च बद्धपरिकरोऽस्मीति भावः । मालिनी नाम वृत्तमत्र ॥ १४ ॥

( नेपथ्ये—हा हा स्वामी ! )

अन्वय.—एषः शोकप्रतीकारः यथाशक्ति निवेद्यते, स्त्रीभिः एतत् मन्त्रिणाम् , असामर्थ्यम् अनुवर्ण्यते ।

व्याख्या—एषः = अयं, शोकस्य प्रतीकारः शोकप्रतीकारः=दुःखविनाशोपायः, यथाशक्ति=निजबुद्ध्यनुसारम् , निवेद्यते = प्रकाश्यते, स्त्रीभिः नारीभिः, एतत् = परिदेवितम् , मन्त्रिणाम्=अमात्यानाम् , असामर्थ्यम् शक्तिरहितत्वम् , अनुवर्ण्यते=प्रस्तूयते । 'हा हा' एवंविधमाक्रन्दनमेव शोकनाशोपायो वनिताजनानां कृते । राजाऽङ्गनाः बन्धुजनं विपन्नं समाक

---

पावेंगे । उस राजा प्रद्योत को जो वत्सराज को ठगकर अपनी विजय समझ रहा है, ठग कर अपने राज्य को पुनः प्राप्तकर ऐश्वर्य की हालत में स्वामी मुझको अपने पास ही देखेंगे ॥ १४ ॥

( नेपथ्य में )

हा, हा, स्वामी !

यौग०—'हा, हा' इस इस प्रकार से रोना ही इस समय शोक को दूर करने का उपाय है, जो स्त्रीजनों द्वारा यथाशक्ति किया जा रहा है । किन्तु अबला जनों का विलाप अमात्यों की असमर्थता को प्रकट करता है ॥ १५ ॥

( प्रविश्य )

प्रतीहारी—अय्य ! भट्टिमादा । [आर्य ! भर्तृमाता । ]

यौग०—किं किम् ।

प्रहतीरी—आह—

यौग०—किमिति ।

प्रतीहारी—एवंविहस्स सुहिज्जणेण परिग्गहीदस्स वच्छराअस्स अअं वुत्तन्तो ! किं सक्कं कत्तुं अन्तरेण विहाणं । ता सम्माणिअ सुहिज्जणं समत्थिअदु । जो खु दाणि सङ्कटेसु वा ण विसीददि, विसमगदो वा ण पय्यवचिट्ठदि, वञ्चिदो वा ण णिव्वेदं गच्छदि, पढिघादेसु वा पाणा ण समुज्झदि, सो खु बुद्धिमन्तो पुच्छिज्जइ पढमं एव्व मे वच्छस्य वअस्सों पच्चा अमच्चो आणेदु मे पुत्तअं पुत्तओ त्ति । [एवंविधस्य सुहृज्जनेन परिगृहीतस्य वत्सराजस्यायं वृत्तान्तः । किं शक्यं कर्त्तुमन्तरेण विधानम् ।

---

संस्मरन्त्यस्तारस्वरेण विलपन्ति, परमेतेन सचिवानां शक्तिराहित्यं सम्प्रकाश्यत इति भावः । अनुष्टुब्वृत्तमत्र लक्षणं पूर्वमेवोक्तम् ॥ १५ ॥

एवंविधस्य=एतादृशशौर्यशालिनः सुहृज्जनेन = सुहृद्वर्गेण, परिगृहीतस्य=युक्तस्य, वत्सराजस्य=उदयनस्य, अयं वृत्तान्तः=एष उदन्तः । विधानम् अन्तरेण=वैरनिर्यातनं विना, किं शक्यं कर्तुम्=विधातुं, न किमपीत्याशयः, तत्=तस्मात् , सम्मान्य=सम्पूज्य, सुहृज्जनम्=मित्रवृन्दं, समर्थ्यताम्=कर्तव्यं सम्प्रधार्यताम , यः = यौगन्धरायणः, खलु = निश्चयेन, इदानीं = साम्प्रतं, सङ्कटेषु=दुःखेषु, वा=अथवा, न विषीदति=क्लेशं नैवानुभवति, विषमगतः=

---

( प्रवेश कर )

प्रती०—आर्य ! स्वामी की माता

यौग०—क्या, क्या ?

प्रती०—कहा है ।

यौग०—क्या ?

प्रती०—इस प्रकार के सुहृज्जनों से समन्वित वत्सराज का यह वृत्तान्त है । दुश्मनों से बिना बदला लिये हुये क्या किया जा सकता है । इसलिये

तत् सम्मान्य सुहृज्जनं समर्थ्यताम् । यः खल्विदानीं सङ्कटेषु वा न विषीदति, विषमगतो वा न पर्यवतिष्ठते, वंचितो वा न निर्वेदं गच्छति, प्रतिघातेषु वा प्राणान् न समुज्झति, स खलु बुद्धिमान् पुच्छ्यते प्रथममेव वत्सस्य वयस्यः पश्चादमात्य आनयतु मे पुत्रकं पुत्रक इति । ]

यौग०—अहो नु खल्वत्रभवत्या राजवंशाश्रितं धीरवाक्यमभिहितम् । अत्रभवत्या सम्भावनां पूजयामि । विजये ! आपस्तावत्

---

विपरीतावस्थास्थितोऽपि. वा = अथवा, न पर्यवतिष्ठते = निश्चिन्तो तिष्ठति, वञ्चितो वा=छलितो वा, निर्वेदं=औदासीन्यं, न=नहि, गच्छति भजते, प्रतिघातेषु वा = विघातेषु वा जायमानेषु, प्राणान्=असून्, न नहि, समुज्झति=जहाति, स=एवंविधगुणोपेतः, खलु = निश्चयेन, बुद्धिमान् धिषणान्वितो भवान्, पृच्छ्यते, प्रथममेव=आदौ, मे = मम. वत्सस्य=पुत्रस्य वयस्यः=सखा, पश्चात्=अनन्तरम् . अमात्यः=सचिवः, पुत्रकः=मम कृत्रिमपुत्ररूपो यौगन्धरायणः, मे = मम, पुत्रकम् = वत्सराजोदयनम्, आनयतु केनापि प्रकारेण मदन्तिकं प्रापयतु, इति ।

अहो नु=आश्चर्यद्योतकं सम्बोधनम्, खलु = निश्चयेन, अत्र भवत्या राजमात्रा, राजवंशाश्रितं=राजकुलपरिशीलितं धीरवाक्यम्=सत्वसमन्वितवचनम्, अभिहितम्=उक्तम् । अत्र भवत्याः, सम्भावनां=मयि स्वाभ्यानयनसामर्थ्याभिमानम्, पूजयामि=सम्पूयिष्यामि, विजये ! इति सम्बोधनम् आपः=जलानि, तावत्=तावत्कालपर्यन्तम् आनयेति शेषः ।

---

मित्रों से परामर्श कर कर्त्तव्य का निर्धारण किया जाय । इस समय सङ्कट में दुःखी नहीं होता, विषमस्थिति में भी जो स्वस्थ होकर नहीं बैठ ठगे जाने पर भी जो उत्साह को नहीं छोड़ता, वाधाओं के समुपस्थित होने पर भी जो उद्यम को नहीं छोड़ता, ऐसा बुद्धिमान पुत्र, प्रथम मेरे उदयन का मित्र पश्चात उसका अमात्य यौगन्धरायण से मैं कहती हूँ मेरे पुत्र उदयन को ला दो ।

यौग०—अहो ! राजमाता ने राजवंश के अनुरूप ही धैर्यपूर्व वात कही है । मैं राजमाता के इस अभिलाषा को पूर्ण करूँगा । विजये ! जल लाओ ।

प्रतीहारी—अय्य ! तह । ( निष्क्रम्य ) इमा आवो [ आर्य ] तथा । इमा आपः । ]

यौग०—आनय ( आचम्य ) विजये ! किमाह तत्रभवती ।

प्रती०—आणेदु में पुत्तअं पुत्तअा त्ति । [ आनयतु मे पुत्रकं पुत्रक इति ]

यौग०—हंसक ! किमाह स्वामी ।

हंसकः—जोअन्धरायणं पेक्खेहि त्ति । [ यौगन्धरायणं प्रेक्षस्वेति । ]

यौग०—विजये !

यदि शत्रुबलग्रस्तो राहुणा चन्द्रमा इव ।
मोचयामि न राजानं नास्मि यौगन्धरायणः ॥ १६ ॥

---

अन्वयः—राहुणा चन्द्रमा इव यदि (स्वामी) शत्रुबलग्रस्तः, ( तर्हि ) ( यदि ) राजानं न मोचयामि यौगन्धरायणः नास्मि ।

व्याख्या—राहुणा=स्वर्भानुना, चन्द्रमा हिमांशुः, इव=यथा, यदि=चेत् ( स्वामी=उदयनः ) शत्रूणां बलेन ग्रस्तः इति शत्रुबलग्रस्तः=रिपुपृतनासगृहीतः, ( तर्हि ) ( यदि ) राजानं=तथाभूतमुदयनम् , न=नहि, मोचयामि=उद्धारयामि चेत् , यौगन्धरायणः नास्मि = अहं यौगन्धरायणो न । अयम्भावः—यथा राहुग्रस्तश्चन्द्रो न चिरं ग्रासमनुभवति, परं राहुसकाशान्मोचनं क्षिप्रं प्राप्नोति, तथैवारिगृहीतः स्वामी चिरं निरोधदुःखं नानु-

---

प्रती०—( निकलकर तथा प्रवेशकर ) आर्य ! यह जल है ।

यौग०—लाओ । ( आचमन कर ) विजये ! राजमाता ने क्या कहा ।

प्रती०—हे पुत्र ! मेरे पुत्र को लाओ ।

यौग०—हंसक ! स्वामी ने क्या कहा ।

हंसक—यौगन्धरायण से मिलो ।

यौग०—विजये !

राहु से ग्रस्त चन्द्रमा के समान शत्रुओं की सेना के द्वारा पकड़े गये स्वामी वत्सराज उदयन को यदि मैं शीघ्र ही न छुड़ाऊँ तो मैं यौगन्धरायण नहीं ॥ १६ ॥

प्रतीहारी—अय्य ! तह । ( निष्क्रान्ता ) ] आर्य ! तथा । !

निर्मु०—अय्य ! अच्छरिअं णिवुत्तं । भट्टिणो सन्तिणिमि उवट्टिअभोअणं बम्हणजणं पेक्खिअ केण वि किल उन्मत्तवेसधारिणा ब्राह्मणेण उच्चं हसिअ उत्तं—सेरं अण्हन्तु भवन्तो अब्भुदअं क्खु इमस्स राअउलस्य भविस्सदि त्ति । तदो वअणसमआलं एव्व अदंसणं गदो । [ आर्य ! आश्चर्यं निर्वृत्तम् । भर्तुः शान्तिनिमित्तमुपस्थितभोजनं ब्राह्मणजनं प्रेक्ष्य केनापि किलोन्मत्तवेषधारिणा ब्राह्मणेनोच्चं हसित्वोक्तं—स्वैरमश्नन्तु भवन्तः, अभ्युदयः खल्वस्य राजकुलस्य भविष्यतीति ततो वचनसमकालमेवादर्शनं गतः । ]

---

भविष्यति, अपितु रिपुसकाशान्मोचनं क्षिप्रं प्राप्स्यति, अन्यथा मन्नाम यौगन्धरायणो नेति । उपमालङ्कारोऽत्र । अनुष्टुब्वृत्तञ्च ।

आर्य ! इति सम्बोधनम् , आश्चर्यम्=अद्भुतं, निर्वृत्तम् = निष्पन्नम्, भर्तुः=स्वामिनः, शान्तिनिमित्तम्=कल्याणहेतुकम् , दुर्दैवशमनरूपफलायेत्याशयः, उपस्थितं भोजनं यस्य सः तम् उपस्थितभोजनं=सन्निहितान्नम्, ब्राह्मणजनम्=विप्रवृन्दम् , प्रेक्ष्य=समवलोक्य, केनापि=अविज्ञातेन, किल=निश्चयेन, उन्मत्तस्य वेषं धारयतीति उन्मत्तवेषधारी, तेन उन्मत्तवेषधारिणा=विक्षिप्ताकृतिकारिणा, ब्राह्मणेन=विप्रेण, उच्चं=तारस्वरेण, हसित्वा = हासं विधाय, उक्तं = निगदितम् , स्वैरं स्वैरं = यथेच्छमुदरपूरम् अश्नन्तु=अदन्तु, भवन्तः=सर्वेजनाः, अभ्युदयः = ऐश्वर्यवृद्धिः कल्याणञ्च खलु=निश्चयेन, अस्य = एतस्य, राजकुलस्य = नृपतिवंशस्य, भविष्यति ।

---

प्रती०—आर्य ! ठीक है । ( निकल जाती है )

( प्रवेशकर )

निर्मु०—आर्य ! अद्भुत हुआ । स्वामी की अनिष्ट शान्ति के लिये समुपस्थित विप्रवृन्द को देखकर किसी ब्राह्मण जो उन्मत्तका-सा वेष धारण किया था, जोर से हँसकर कहा कि 'आपलोग इच्छानुसार भरपेट भोजन करें । इस राजकुल का निश्चित ही अभ्युदय होगा । तदनन्तर इस कथन के साथ ही वह अदृश्य हो गया ।

यौग०—अपि सत्यम्।

( ततः प्रविशति ब्राह्मणः )

ब्राह्मणः—इमेऽत्रभवता परिगृहीता आत्मप्रयोजनोत्सृष्टाः परिच्छदविशेषाः। एभिः प्रच्छादितशरीरो भगवान् द्वैपायनः प्राप्तः।

यौग०—एवं, द्वैपायनः प्राप्तः।

ब्राह्मणः—बाढम्।

यौग०—तेन हि पश्यामस्तावत्।

ब्राह्मणः—पश्यन्तु भवान्।

यौग०—कथमन्यद् रूपमिव मे संवृत्तम्। हन्त भोः! गतो-

---

आगामिनि काले सम्पत्स्यते, इति=एवं प्रकारेण, ततः=तदनन्तरं, वचनस्य समकालम्, वचनसमकालं=कथनानुपदम्, एव=निश्चयेन, अदर्शनं गतः=अन्तर्हितोऽभवदिति।

इमे=मत्करसंस्थिताः, अत्रभवता=विक्षिप्ताकृतिकारिणा, द्विजेन, परिगृहीताः=समुपयुक्ताः, आत्मप्रयोजनोत्सृष्टाः=आत्मप्रयोजनेन निवृत्तेन समुज्झिताः, परिच्छदविशेषाः=उपकरणविशेषाः। एभिः=उपकरणविशेषैः, प्रच्छादितं शरीरं यस्य सः प्रच्छादितशरीरः=गुप्तकायः, भगवान् द्वैपायनः=व्यासः, प्राप्तः=समागतः।

कथं=केन प्रकारेण, मे=मम, अन्यद् रूपमिव=रूपान्तरमिव, संवृत्तम्=

---

यौग०—क्या यह सत्य है?

( तदनन्तर ब्राह्मण प्रवेश करता है )

ब्राह्मण—अपना प्रयोजन पूर्ण हो जाने पर त्यागे हुए इन वस्त्रों को इन्होंने पुनः धारण कर लिया। इनसे अपना शरीर ढँककर द्वैपायन व्यास पधारे हैं।

यौग०—अच्छा, द्वैपायन इस प्रकार से आये हैं।

ब्राह्मण—हाँ,

यौग०—तो अब देखते हैं।

ब्राह्मण—आप देखें।

यौग०—मेरा रूप दूसरी तरह क्यों हो गया। आश्चर्य है, लगता है

ऽस्मि स्वामिसन्निकर्षमेव । इदानी ममोपदेशार्थमिवोत्सृष्टाः ।

उन्मत्तदृशो वेशो धारितस्तेन साधुना ।
मोचयिष्यति राजानं मां च प्रच्छादयिष्यति ॥ १७ ॥

प्रतीहारी—अय्य ! भट्टिमादा आह—इच्छामि पुत्तअं पेक्खिदुं त्ति । [ आर्य ! भर्तृमात्राह—इच्छामि मे पुत्रकं प्रेक्षितुमिति । ]

---

सञ्जातम् । हन्त भोः ! स्वामिनः सन्निकर्षम् इति स्वासन्निकर्षम् = वत्सराजस्यान्तिकम् , एव=खलु, गतोऽस्मि = प्राप्तोऽस्मि । इदानीम् = अधुना ममोपदेशार्थं = मत्शिक्षणार्थम् , इव = यथा, उत्सृष्टाः = त्यक्ताः । 'इमान् परिच्छदान् धारयन् शत्रुनगरसमीपमकुतोभयं सञ्चर' इत्येवंरूपेण मामुपदिशतीत्याशयः ।

अन्वयः—तेन साधुना उन्मत्तसदृशः वेषः धारितः राजानं मोचयिष्यति मा च प्रच्छादयिष्यति ।

व्याख्या—तेन=पूर्वोक्तेन, साधुना=द्वैपायनेन, उन्मत्तसदृशः=विक्षिप्तानुरूपः, वेषः=वसनादिकं, धारितः=कृतः, (सः) राजानं=उदयनं, मोचयिष्यति=वन्धनादुन्मुक्तं विधास्यति, मां च=यौगन्धरायणञ्च, प्रच्छादयिष्यति=प्रच्छन्नस्वरूपं करिष्यति । अनुष्टुब्वृत्तमत्र ।। १७ ।।

आर्य ! इति सम्बोधनम् , भर्तृमाता=राजमाता, आह=उवाच, इच्छामि=अभिलषामि, मे=मम, पुत्रकं=कृत्रिमसुतं, प्रेक्षितुं=द्रष्टुम् , इति=एवम् ।

---

जैसे मैं स्वामी के पास पहुँच गया हूँ । इस समय मुझे 'इन वस्त्रों को पहनकर शत्रु के पुरी में निर्भय होकर भ्रमण करो' ऐसा उपदेश देने के लिये ही इन वस्त्रों को छोड़ गये हैं ।

उस सज्जन द्वैपायन व्यास ने उन्मत ( पागल ) का सा वेष धारण किया । वह नृपति वत्सराज उदयन को बन्धन से मुक्त करेगा और मुझे भी छिपायेगा ।। १७ ।।

( प्रवेश कर )

प्रती०—आर्य ! राजमाता ने कहा है कि पुत्र यौगन्धरायण को देखना चाहती हूं ।

यौग०—अयमयमागच्छामि । आर्य ! शान्तिगृहे मां प्रतीक्षस्व ।

ब्राह्मणः—बाढम् । ( निष्क्रान्तः । )

यौग०—हंसक ! विश्रम्यतामिदानीम् ।

हंसक—अय्य ! तह । [ आर्य ! तथा । ] ( निष्क्रान्तः )

यौग०—विजये ! गच्छाग्रतः ।

प्रतीहारी—अय्य ! तह । [ आर्य ! तथा । ]

यौग०—भोः

काष्ठादग्निर्जायते मथ्यमानाद्
भूमिस्तोयं खन्यमाना ददाति ।

---

अयम्=आगच्छामि=अचिरादहमागमिष्यामि, आर्य ! इति समुदाचारः, शान्तिगृहे=विश्रामालये, मां=यौगन्धरायणं, प्रतीक्षस्व=प्रतीक्षां कुरु ।

अन्वयः—मथ्यमानात् काष्ठात् अग्निः जायते, खन्यमाना भूमिः तोयं ददाति, सोत्साहानां नराणाम् असाध्यं नास्ति, मार्गारब्धाः सर्वयत्नाः फलन्ति ।

व्याख्या—मथ्यमानात्=निर्मथनशीलात्, काष्ठात्=अरणेः, अग्निः=पावकः, जायते=समुत्पद्यते, खन्यमाना = अवदार्यमाणा, भूमि. = क्षितिः, तोयम् = उदकम्, ददाति = प्रयच्छति, उत्साहेन सहितः सोत्साहः, तेषां

---

यौग०—मैं अभी आ रहा हूँ । आर्य ! शान्तिगृह में मेरी प्रतीक्षा करें ।

ब्राह्मण—अच्छा । ( निकल जाता है । )

यौग०—हंसक ! तुम अभी विश्राम करो ।

हंसक—आर्य ! जैसी आज्ञा ( निकल जाता )

यौग०—विजये ! आगे चलो ।

प्रती०—आर्य ! अच्छा ।

यौग०—हे !

अतिशय मन्थन ( संघर्ष या रगड़ ) करने से काष्ठ से अग्नि पैदा हो

सोत्साहानां नास्त्यसाध्यं नराणां
मार्गारब्धाः सर्वयत्नाः फलन्ति ।। १८ ।।

( निष्क्रान्तः )

इति प्रथमोऽङ्कः ।

सोत्साहानां=उद्योगशीलानां, उत्साहान्वितानां वा, नराणां=पुरुषाणां कृते, न साध्यम् , असाध्यम्=दुष्प्राप्यं, नास्ति=किमपि न विद्यते, मार्गेण समुचितेन यथा आरब्धाः कृताः सुप्रणीता इति मार्गारब्धाः=न्यायाचरिताः, सर्वयत्नाः=अशेषोपायाः, फलन्ति=साफल्यमधिगच्छन्ति । शालिनी नाम वृत्तमत्र । तल्लक्षणं यथा—

'मात्तौ गौ चेच्छालिनी वेदलोकैः' इति ।। १८ ।।

जाती है । खोदने पर पृथ्वी जल देती है । उत्साह सम्पन्न (उद्यम परायण) व्यक्तियों के लिये कुछ भी असम्भव या असाध्य नहीं है । समुचित रीति से प्रारम्भ किये गये सभी प्रयत्न सफल होते हैं ।। १८ ।।

( निकल जाता है )

।। प्रथम अङ्क समाप्त ।।

# अथ द्वितीयोऽङ्कः

( ततः प्रविशति काञ्चुकीयः )

काञ्चुकीयः—आभीरक ! आभीरक ! गच्छ महासेनवचनात् प्रतीहार रक्षकं ब्रूहि—एष काशिराजोपाध्याय आर्यजैवन्तिरद्य दौत्येन प्राप्तः। अस्य सामान्यदूतसत्कारं पृष्ठतः कृत्वा सुखमिव निवेश्यताम्। यथा चातिथिसत्कारं जानीयात् तथा प्रयतितव्यम् इति। भोः! एवं नामाऽहन्यहनि गोत्रानुकूलेभ्यो राजकुलेभ्यः कन्याप्रदानं प्रति दूतसम्प्रेषणा

---

अङ्कान्तरस्यारम्भं संसूचयति अथ इत्यादिना। अथ=अनन्तरं, द्वितीयः=प्रथमानन्तरं क्रमोपस्थितोऽङ्कः प्रारभ्यत इति भावः।

ततः—द्वितीयाङ्कस्यादौ यौगन्धरायणादीनां रंगमञ्चान्निष्क्रमणानन्तरम्, काञ्चुकीयः प्रविशति=काञ्चुकीयो रङ्गमञ्चं समागच्छति।

आभीरक ! आभीरक !=इति सम्बोधनम्, गच्छ=व्रज, महासेनस्य वचनात् इति महासेनवचनात्=महासेनशासनात्, प्रतीहारस्य रक्षकम् इति प्रतीहाररक्षकम्=द्वारपालं, ब्रूहि=कथय, एष=अयं, काशिराजस्य उपाध्यायः इति काशिराजोपाध्यायः=वाराणसीनृपपुरोहितः, आर्यजैवन्तिः=एतन्नामा, अद्य=अस्मिन् वासरे दूतस्य भावः दौत्यम् तेन दौत्येन=संवादसंवाहकत्वेन, प्राप्तः=समागतः, अस्य=काशिराजपुरोहितस्य, सामान्यदूतसत्कारम्=सर्वसाधारणदूतसम्मानं, पृष्ठतः कृत्वा=दूरीकृत्य, विशेषदूत इव सत्कारं विधाय, सुखमिव=सुखं यथा स्यात्तथा, निवेश्यताम्=प्रवेश्य। यथा च=येन प्रकारेण, अतिथिसत्कारम्=आतिथ्यभावं, जानीयात्=अनुभवेत्, तथा=तेन प्रकारेण,

---

( तदनन्तर कञ्चुकी प्रवेश करता है )

काञ्चुकीय—आभीरक ! आभीरक ! जाओ, महासेन की आज्ञा से द्वारपाल से कहो कि आज काशीनरेश के उपाध्याय ( पुरोहित ) सन्देशवाहक बनकर आये हैं। सामान्य दूतों से अधिक अर्थात् विशेष अतिथि के समान इनका सम्मान कर इनको आनन्दपूर्वक ठहराओ। जिस विधि से 'मेरा पूर्ण अतिथि सत्कार हुआ है' ऐसा वह समझें वही तुम्हें करना चाहिए।

वर्तते। न खलु महासेनः कञ्चिदपि प्रत्याचष्टे, न चाप्यनुगृह्णीते किन्तु खल्विदम्। अथवा दैवमत्र कन्याप्रदानेऽधिकृतम्। कुतः,

व्यक्तं न तावत् समुपैति तस्य दूतो वधूत्वे विहिता हि यस्य।
ततो नरेन्द्रेषु गुणान् नरेन्द्रो न वेत्ति जानन्नपि तत्प्रतीक्षः ॥१॥

---

प्रयतितव्यम् = प्रयासो विधातव्यम्, भोः = इति मनसि सम्बोधनम्, एवं नाम = एवंविधः, अहनि अहनि = प्रतिदिनं, गोत्रानुकूलेभ्यः = वंशानुरूपेभ्यः राजकुलेभ्यः = नृपतिवंशेभ्यः, कन्याप्रदानं प्रति = आत्मजापरिणयार्थं, दूतानां सम्प्रेषणा दूतसम्प्रेषणा, वर्तते = भवति, महासेनः = एतन्नामा नृपतिः, खलु = निश्चयेन, कञ्चिदपि = एकमपि, भूपतिं, न = नहि, प्रत्याचष्टे = निषेधयति, न चापि अनुगृह्णीते = न चापि स्वीकरोति, किन्तु खल्विदम् = किमिदमिति साश्चर्यं प्रश्नः, अथवा = उताहो, अत्र = अस्मिन् विषये, दैवम् = भागधेयं, कन्याप्रदाने = तनयापरिणये, अधिकृतम् = अङ्गीकृतम्। कुतः = यतो हि—

अन्वयः—यस्य हि वधूत्वे विहिता तस्य दूतः न तावत् समुपैति- व्यक्तम्, ततः नरेन्द्रः तत्प्रतीक्षः नरेन्द्रेषु गुणान्, जानन्नपि न वेत्ति।

व्याख्या—यस्य = भूपविशेषस्य, हि = निश्चयेन, वधूत्वे = सा वासवदत्ता कान्तात्वेन, विहिता = निश्चिता, दैवेनेतिशेषः, तस्य = राज्ञः, दूतः = सन्देशवाहकः, तावत् = साम्प्रतं यावत् = न = नहि, समुदैति = आगतः, ततः = तस्माद् दूतोः, नरेन्द्रः = महासेनः, तत्प्रतीक्षः = तथाविधवरदूतं प्रतीक्षमाणः, नरेन्द्रेषु = सम्प्रेषितदूतेषु भूपतिषु, गुणान् = सद्‌गुणान्, जानन्नपि = अवगच्छन्नपि, न = नहि, वेत्ति = जानाति। इन्द्रवज्रा-उपेन्द्रवज्रावृत्तयोः सम्मिश्रणादुपजातिवृत्तमत्र। तल्लक्षणं यथा—'स्यादिन्द्रवज्रा यदि तौ जगौ गः' 'उपेन्द्रवज्रा

---

इस प्रकार प्रतिदिन भिन्न-भिन्न राजवंशों से कन्या के विवाह के निमित्त दूत आ रहे हैं। राजा महासेन न किसी को अस्वीकार करते हैं और न किसी को स्वीकार ही करते हैं। यह क्या बात है ? अथवा इस कन्या वासवदत्ता का विवाह भाग्य के ही अधीन है। क्योंकि—

वह वासवदत्ता जिसकी स्त्री बनने वाली है, उसका सन्देशवाहक अभी नहीं आया है। यह बात सुस्पष्ट है। इसीलिए राजा प्रद्योत उसके दूत की

अये सलीयमानान्तःपुरचरः सनाथीभवत्ययं देशः अये अयं महा-सेनः, य एषः,

दूर्वाङ्कुरस्तिमितनीलमणिप्ररोहैः
पोताङ्गदैः परिगतैः परिणीवितांसः ।
अस्माद् घनात् कनकतालघनैकदेशा-
न्निर्धावितः शरवणादिव कार्त्तिकेयः ॥ २ ॥

---

प्रथमेलघौ सा' 'अनन्तरीदोरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति लक्षणात् ॥ १ ॥

अये=साश्चर्यसम्बोधनमिदम्, संलीयमानाः=प्रच्छन्नाः, अन्तःपुरचराः=अन्तःपुरभुत्याः यस्मिन् स संलीयमानान्तःपुरचरः = प्रच्छन्नान्तःपुरसेवकः, अयं देशः=एष प्रदेशः सनाथीभवति-नृपान्वितो विद्यते ।

अन्वयः—दुर्वाङ्कुरस्तिमितनीलमणिप्ररोहैः परिगतैः पीताङ्गदैः परिणीवितांसः अस्मात् घनात् कनकतालवनैकदेशात् शरवणात् निर्धावितः कार्तिकेयः इव ।

व्याख्या—दूर्वाङ्कुरा इव स्तिमिताः=स्निग्धाः, नीलमणिप्ररोहाः= नीलरत्नांकुरा. येषु तैः दूर्वाङ्कुरस्तिमितनीलमणिप्ररोहैः=अभिनवदूर्वाङ्कुरचिक्कणनीलमुक्ताङ्कुरसमन्वितैः, परिगतैः=परितोनिविष्टैः, पीताङ्गदैः=पीतवर्णान्वितकेयूरैः, कनकरचितभुजदण्डैरलंकारविशेषैर्वा, परिणीवितौ स्थूलितौ परिबृंहणमधिगतौ अंसौ स्कन्धौ यस्य सः परिणीवितांसः=स्थूलस्कन्धः, अस्मात्=एतस्मात्, घनात्=सान्द्रात्, कनकश्चम्पकः तालः तृणराजस्तदुभयबहुलस्य वनस्य एकदेशात् भागात् इति कनकतालवनैक-

---

प्रतीक्षा कर रहा है और अन्य भूपतियों के गुणों को जानता हुआ भी न जानने का अभिनय करता है ॥ १ ॥

यह स्थान जहाँ अन्तःपुर के चर प्रच्छन्न रूप से निवास करते हैं, स्वामी महासेन से सनाथित है। अरे ! यह तो महासेन हैं। जो यह—

दूर्वाङ्कुर के सदृश स्निग्ध ( चिकने ) नीलमणि जिनमें जटित हैं, ऐसे कनक निर्मित केयूरों ( भुजबन्द ) से इनके कन्धे मोटे हो गये हैं। जिस तरह कार्तिकेय शरवन ( सरपत के वन ) से निकल कर दौड़े थे, उसी तरह

( निष्क्रान्तः । )

विष्कम्भकः ।

( ततः प्रविशति राजा सपरिवारः ।

राजा—

मम हयखुरभिन्नं मार्गरेणुं नरेन्द्रा
मुकुटतटविलग्नं भृत्यभूता वहन्ति ।
न च मम परितोषो यन्न मां वत्सराजः
प्रणमति गुणशाली कुञ्जरज्ञानदृप्तः ॥ ३ ॥

---

देशात्=चम्पकतालबहुलविपिनप्रदेशात्, शरवणात् — शरविपिनात्, नि वितः=सवेगो निर्गच्छतः कार्तिकेयः = स्कन्दः, इव = यथा, शोभत शेषः । वसन्ततिलकावृत्तमत्र 'उक्ता वसन्ततिलका तभजा जगौ गः' लक्षणात् ॥ २ ॥

ततः = तदनन्तरं, राज = महासेनः, सपरिवारः=परिवारान्वितः, प्र शति = प्रवेशं विदधाति ।

अन्वयः—मम हयखुरभिन्नं मुकुटतटविलग्नं मार्गरेणुं नरेन्द्राः भृत् (सन्तः) वहन्ति, न च मम परितोषः, यत् माम् गुणशाली कुञ्जरज्ञानदृ वत्सराजः न प्रणमति ।

व्याख्या—मम=महासेनस्य, हयखुरभिन्नं=वाजिशफविदीर्णं, मुकुट विलग्नं = किरीटप्रदेशसंलग्नं, मार्गरेणुं=मार्गधूलिं, नरेन्द्राः = अन्ये नरपत भृत्याः=अनुचरभूताः सन्तः, वहन्ति = शिरसा संधारयन्ति, न च=नैव, म

---

यह राजा इस घने तथा चम्पक और तालवृक्षों से व्याप्त कानन प्रदे निकल कर दौड़ रहा है ॥ २ ॥

( निकल जाता है )

विष्कम्भक समाप्त

( तदनन्तर राजा सपरिवार प्रवेश करता है । )

राजा—मेरे अश्वों के खुरों से समुत्थापित एवं मुकुट में संलग्न की धूल को अन्य नृपतिगण अनुचर की तरह धारण करते हैं, किन्तु इससे परितोष प्राप्त नहीं होता । क्योंकि हस्ति-समूहों को वश में करने

बादरायण !

( प्रविश्य )

काञ्चु०—जयतु महासेनः ।

राजा—निवेशितो जैवन्तिः ।

काञ्चु०—निवेशितोऽनुरूपतश्च सत्कृतः ।

राजा—न्याय्यं कृतं राजवंस्यगुणाभिलाषिणा । समागतानां युक्तः पूजया प्रतिग्रहः । अथ सर्वोऽपि कन्याप्रदानं प्रति पृष्टश्चेत् परच्छन्देन

---

मे, परितोषः=सन्तोषः, विद्यत इति शेषः, यत् = यतो हि, माम् = महासेनं, गुणशाली=सद्गुणसमन्वितः, कुञ्जरज्ञानदृप्तः=वारणवशीकरणज्ञानगर्वितः, वत्सराजः=उदयनः, न=नहि, प्रणमति = प्रणामं विदधाति । ममाधीनतां नाङ्गीकरोतीति भावः । मालिनी नाम वृत्तमत्र । तल्लक्षणं यथा—'ननमययुतेयं मालिनी भोगिलोकैः' इति ॥ ३ ॥

बादरायण !=इति सम्बोधनम् , प्रविश्य=प्रवेशं विधाय ।

राजवंश्यगुणाभिलाषिणा = भूपतिवंशोद्भवगुणपक्षपातिना भवता न्याय्यं=समुचितं, कृतं=विहितम् । समागतानाम् = अभ्यागतानां, युक्तः = उचितः, पूजया=अर्चनया, प्रतिग्रहः=सम्मानम् । अथ = अनन्तरं, सर्वोऽपि= सकलोपि जनः, कन्याप्रदानं प्रति=वासवदत्तापरिणयं प्रति, पृष्टश्चेत् = जिज्ञासितो यदि, परच्छन्देन = पराधीनेन, मदभिप्रायप्रतीक्षयेति भावः,

---

विद्या का विज्ञाता गुणशाली वत्सराज उदयम मुझे प्रणाम नहीं करता अर्थात् वह मेरी अधीनता स्वीकार नहीं करता है ॥ ३ ॥

बादरायण !

( प्रविष्ट होकर )

काञ्चु०—महासेन की जय हो ।

राजा—जैवन्ति को निवास दिया गया ?

काञ्चु०—समुचित स्थान दिया गया और सत्कार भी किया गया ।

राजा—राजकुल के गुणों का सम्मान करनेवाले आपने उचित ही किया । अतिथि का सम्मान पूर्वक सत्कार करना ही योग्य है । अपनी पुत्री वासवदत्ता के विवाह के विषय में जिस किसी से पूछता हूँ, अपना अभिप्राय

तिष्ठति। (काञ्चुकीयमवलोक्य) बादरायण! वक्तुकाममिव·
लक्षये।

काञ्चु०—न खलु किञ्चित्। कन्याप्रदानं प्रति समुत्पन्नोऽभिम

राजा—अलमलं परिहृत्य। सर्वसाधारणो ह्येष विधिः। अभि
यताम्।

काञ्चु०—महासेन! एषा में विवक्षा—एवं नामाहन्यहनि गोत्र
नुकूलेभ्यः राजकुलेभ्यः कन्याप्रदानं प्रति दूतसम्प्रेषणा वर्तते। न

---

तिष्ठति=मौनमाकलयति, काञ्चुकीयम्, अवलोक्य=दृष्ट्वा, बादराय
इति कञ्चुकीं प्रति सम्बोधनम्, वक्तुकाममिव=विवक्षुमिव, त्वां =
रायणं, लक्षये=पश्यामि।

न खलु किञ्चित्=किमप्यन्यत् न, कन्याप्रदानं प्रति=तनयापरि
प्रति, समुत्पन्नः=संजातः, अभिमर्शः=विचारः।

अलमलं परिहृत्य=यद्वक्तव्यं विद्यते तन्मा परित्यज। एष विधिः
लौकिकोऽयं व्यवहारः, सर्वसाधारणः=सर्वजनपरिपालनीयः, हि=निश्चये

महासेन! इति राजानं प्रति सम्बोधनम्, एषा मे विवक्षा=अहं
वक्तुमभिलषामि, एवं नाम=एवं प्रकारेण, अहन्यहनि=प्रतिवासरं, गोत्र
कूलेभ्यो राजकुलेभ्यः = यथानुरूपराजवंशेभ्यः, कन्याप्रदानं प्रति = आत्म
विवाहार्थं, दूतसम्प्रेषणा=सन्देशहरानुप्रेषणं, वर्तते=भवति, न च=न
महासेनः=भवान्, कञ्चिदपि=कमपि, प्रत्याचष्टे=निराकरोति, न

---

प्रकट नहीं करता। वह मेरे ही मनोरथ को जनना चहता है। (कञ्चुकी
ओर देखकर) बादरायण! में देखता हूँ कि तुम कुछ कहना चाहते हो।

काञ्चु०—कुछ विशेष बात नहीं, केवल कन्या के विवाह के विषय
मन में कुछ विचार उत्पन्न हुआ है।

राजा—उसे गुप्त मत रखो। यह कार्य तो सर्वसामान्य जन का है।

कञ्चु०—महासेन! मेरे कथन का अभिप्राय यह है कि इस प्र
प्रतिदिन सद्वंशों में समुद्भूत नृपतिगण कन्या के विवाह के लिये सं
हर (दूत) भेज रहे हैं। और आप महासेन न तो किसी का प्रतिषेध क

महासेनः कश्चिदपि प्रत्याचष्टे, न चाप्यनुगृह्णीते किन्तु खल्विदमिति।
राजा—बादरायण! एवमेतत्। अतिलोभाद् वरगुणानामतिस्नेहाच्च वासवदत्तायां न शक्नोमि निश्चयं गन्तुम्।

कुलं तावच्छ्लाघ्यं प्रथममभिकाङ्क्षे हि मनसा
ततः सानुक्रोशं मृदुरपि गुणो ह्येष बलवान्।
ततो रूपे कान्ति न खलु गुणतः स्त्रीजनभयात्
ततो वीर्योदग्रं न हि न परिपाल्या युवतयः॥ ४॥

---

खलु, अनुगृह्णीते=अङ्गीकरोति, किन्तु खल्विदमिति=किमिदं विद्यते।
बादरायण!—इति कञ्चुकीं प्रतिसम्बोधनम्, एवमेतत्=एतादृशमेव वर्तते, वरगुणानां=कन्यापतिसद्गुणानाम्, अतिलोभात्=लोभाधिक्यात्, वासवदत्तायां=स्वतनयायाम्, अतिस्नेहाच्च=प्रेम्णोऽतिशयात् निश्चयं गन्तुं=किमपि निश्चेतुं, न शक्नोमि=न समर्थो भवामि।
अन्वयः—प्रथमं मनसा तावत् श्लाघ्यं कुलम् अभिकाङ्क्षे, ततः सानुक्रोशं (वरं), एष गुणः मृदु अपि बलवान्, हि ततः रूपे कान्तिम् गुणतः खलु न स्त्रीजनभयात् (अभिकाङ्क्षे), ततः वीर्योदग्रम्, हि युवतयः न न परिपाल्याः।
व्याख्या—प्रथमं=आदौ, मनसा=चेतसा, तावत्, श्लाघ्यं=प्रशंसनीयं, कुलं=वंशम्, अभिकाङ्क्षे=अभिलषामि, ततः=तदनन्तरं, सानुक्रोशं=सानुकम्पं, पतिं कामय इति शेषः, एष=अयं वन्दनीयः, गुणः=सद्गुणः मृदुरपि=कोमलान्वितोऽपि बलवान्=शौर्यान्वितः, सानुक्रोशेन परान् वशीकरोतीत्याशयः, हि=यतः, ततः=तदनन्तरं, रूपे=आकृतौ, कान्ति=सुन्दरताम्,

---

हैं और न किसी को अंगीकार ही करते हैं। यह क्या है?
राजा—बादरायण! यह ठीक ही है। वर में अधिक गुणों के लोभ से और वासवादत्ता में अत्यधिक स्नेह के कारण मैं किसी निश्चय पर नहीं पहुँच पाता हूँ।
सर्वप्रथम मैं मन से वर के परिवार की कुलीनता चाहता हूँ, उसके अनन्तर मेरी अभिलाषा है कि वह मृदु, दयालु और बलवान् हो। इसके बाद मैं यह भी चाहता हूँ कि वह सुन्दर हो। यह सुन्दरता गुण के लिये ही

काञ्चु०—महासेनं वर्जयित्वा न हीदानीमेते गुणा क्वचिदेक
दृश्यन्ते ।

राजा—अतः खलु चिन्त्ये ।

कन्याया वरसम्पत्तिः पितुः ( प्रायः ) प्रयत्नतः ।
भाग्येषु शेषमायत्तं दृष्टपूर्वं न चान्यथा ॥ ५ ॥

---

गुणतः खलु न=सौन्दर्यं गुणमेतावता न वाञ्छामि, अपितु स्त्रीजनभयात्
नृपाङ्गनाभीतेः, यतो हि नार्यः प्रथमं रूपमेवाभिनन्दन्ति । ततः=तदनन्
वीर्योदग्रं=शौर्यपरिबृंहितम् , वरं वाञ्छामीति भावः, हि=निश्चयेन,
तयः=कामिन्यः, न न परिपाल्याः=नैव नैव रक्ष्याः, अपित्ववश्यमेव सर्व
भावेन रक्षणीयाः भवन्तीति भावः । शिखरिणी नाम वृत्तमत्र, तल्लक्ष
यथा—'रसैरुद्रैश्छिन्नाः यमनसभलागः शिखरिणी' इति ॥ ४ ॥

महासेनं=एतन्नामकं राजानं, वर्जयित्वा=परिहाय, न हि=नैव, इदानीं
साम्प्रतं, एते गुणाः=इमे सद्गुणाः, क्वचिद् = कुत्रापि, एकस्था = एक
दृश्यन्ते=अवलोक्यन्ते ।

अन्वयः—प्रायः कन्यायाः वरसम्पत्तिः पितुः प्रयत्नतः (भवति) शे
भाग्येषु आयत्तम् (लोके) दृष्टपूर्वं च अन्यथा न ।

व्याख्या—प्रायः=प्रायशः, कन्यायाः=परिणयसंस्कारयोग्यायाः दुहि
वरसम्पत्तिः=सद्गुणसमन्वितवरप्राप्तिः, पितुः=जनकस्य, प्रयत्नतः=प्र
सेन, भवत्तीति शेषः, शेषम्=वरातिरिक्तं सुखदुःखादिकम् , भाग्येषु=भा

---

नहीं चाहता, किन्तु स्त्री समुदाय के भय से भी चाहता हूँ । फिर यह
चाहता हूँ कि वह पराक्रमशाली हो, क्योंकि स्त्रियाँ सर्वदा रक्षणीय हो
हैं ॥ ४ ॥

कञ्चु०—ये सब गुण इस-समय महासेन को छोड़कर किसी एक पु
में नहीं दिखाई पड़ते हैं ।

राजा—इसी लिये चिन्तित हूँ ।

प्रायः पुत्री के लिये सर्वगुण सम्पन्न पति पिता के प्रयास से उपल
होता है । शेष बातें तो भाग्याधीन हैं, क्योंकि अच्छी तरह विचार
किया गया कार्य निष्फल नहीं होता ॥ ५ ॥

दुहितुः प्रदानकाले दुःखशीला हि मातरः । तस्माद् देवी तावदाहूयताम् ।

काञ्चु०—यदाज्ञापयति महासेनः । ( निष्क्रान्तः )

राजा—भोः काशिराजदूतसम्प्रेषणेन वत्सराजग्रहणार्थं गतं शालङ्कायनं प्रति गता मे बुद्धिः । किन्नु खल्वद्यापि वृत्तान्तं न प्रेषयति स ब्राह्मणः ।

कामं या तस्य सा लीला तत्रैवानुगतं मनः ।

---

धेयेषु , आयत्तम् = अधीनं ( लोके=संसारे) दृष्टपूर्वं च = पूर्वविवेचितञ्च, कर्त्तव्याकर्त्तव्यविचारविहितः प्रयत्नश्च, अन्यथा न=निष्फलो न, भवतीति शेषः । अनुष्टुब्वृत्तमत्र । ॥ ५ ॥

दुहितुः = आत्मजायाः, प्रदानकाले = परिणयसमये, हि = निश्चयेन, मातरः=जनन्यः, दुःखशीला=करुणा समन्विताः, भवन्तीति शेषः, तस्मात् = तद्धेतोः, देवीं = वासवदत्तामातरम् , तावत् , आहूयताम्=समानीयताम् ।

काशिराजस्य दूतः इति काशिराजदूतः, तस्य सम्प्रेषणेन इति काशिराजदूतसम्प्रेषणेन=काशीपतिसन्देशवाहकसमागतेन, वत्सराजग्रहणार्थं=एतन्नामकनृपतिग्रहणार्थं, गतं=प्रस्थितं, शालङ्कायनं प्रति = एतन्नामकममात्यं प्रति, मे=मम, बुद्धिः=मनीषा, गता=प्राप्ता । किन्नु खलु=किमत्रकारणम् , अद्यापि = साम्प्रतमपि, वृत्तान्तं = उदन्तं, न = नहि, प्रेषयति, स ब्राह्मणः= शालङ्कायनः ।

अन्वयः—या तस्य सा लीला तत्रैव मनःकामम् अनुगतम् , अस्य ये सर्वे सचिवाः ते यत्नमास्थाय स्थिताः ।

---

पुत्री के विवाह के समय माताओं को अत्यधिक कष्ट होता है, इसलिये वासवादत्ता की जननी को बुलाओ ।

कञ्चु०—महाराजा की जैसी आज्ञा ( निकल जाता है । )

राजा—काशिराज के दूत सम्प्रेषण से वत्सराज उदयन को पकड़ने के लिये गये हुए अमात्य शालकायन की ओर मेरा चित्त चला गया है । क्या बात है कि वह ब्राह्मण अभी तक कोई समाचार नहीं भेज रहा है ।

राजा वत्सराज का मन तो अपने प्रिय खेल हाथियों के आखेट में लगा

ये त्वस्य सचिवाः सर्वे यत्नमास्थाय ते स्थिताः ॥ ६ ॥

( ततः प्रविशति देवी सपरिवारा )

देवी—जेदु महासेणो। [ जयतु महासेनः ]

राजा—आस्यताम्।

देवी—जं महासेणो आणवेदि ( उपविशति )। [यन्महासेन आज्ञाप-यति]

राजा—वासवदत्ता क्व ?

देवी—उत्तराए वेदालिआए सआसे वीणं सिक्खिदुं णारदीअं गव

---

व्याख्या—या = प्रथिता, तस्य=वत्सराजोदयनस्य सा लीला=गज खेटरूपाक्रीडा, तत्रैव=क्रीडायामेव, मनः=निजम्, कामम्=पर्याप्तं, अनुगतः संलग्नं विद्यते, तु=किन्तु, अस्य=उदयनस्य, सर्वे=निखिलाः, सचिवाः= मन्त्रिणः, ते=सर्वे, यत्नमास्थाय=उपायमवलम्ब्य, स्थिताः=विद्यन्ते। अर्था विलास्यपि वत्सराजः स्वामिन्यनुरक्तैः सोपायं संरक्ष्यत इत्याशयः। अनु-ष्टुब्वृत्तमत्र ॥ ६ ॥

( ततः=तदनन्तरं, सपरिवारा=परिवारसमन्विता, देवी=वासवदत्ता-जननी, प्रविशति=प्रवेशं विदधाति )

वासवदत्ता=एतन्नाम्नी कन्या, क्व=कुत्र ?

उत्तरायाः एतन्नामिकायाः, वैतालिक्याः = वादित्रशिक्षिकायाः

---

रहता है। किन्तु उसके अमात्य भी अनेक विध उपायों से उसकी रक्षा में संलग्न रहते हैं॥ ६ ॥

( तदनन्तर अपने परिवार के सहित रानी प्रवेश करती है )

देवी—महाराज महासेन की जय हो।

राजा—बैठो।

देवी—महाराज की जैसी आज्ञा। ( बैठती है )।

राजा—वासवदत्ता कहाँ है ?

देवी—उत्तरा नामवाली वैतालिका के पास नारदीय पद्धति से वीणा सीखने गई है।

आसी । [ उत्तराया वैतालिक्याः सकाशे वीणां शिक्षितुं नारदीयां गतासीत् ।]

राजा—कथमुत्पन्नोऽस्या गान्धर्वेऽभिलाषः ।

देवी—केण वि किल उग्घादेण कञ्चणमालं वीणाजोग्गं करअन्ति पेक्खिअ सिक्खिदुकामा आसी । [ केनापि किलोद्घातेन काञ्चनमालां वीणायोग्यां कुर्वंतीं प्रेक्ष्य शिक्षितुकामासीत् । ]

राजा—सदृशं बाल्यस्य ।

देवी—महासेण वि किं विण्णविदुकामा म्हि । [महासेनमपि किमपि विज्ञापयितुकामास्मि । ]

राजा—किमिति ।

---

सकाशे = पार्श्वे, नारदीयां = नारदपद्धतिविशिष्टां वीणां=वीणावादनकलां, शिक्षितुं=विज्ञातुं, गतासीत्=प्रस्थितासीत् ।

अस्याः = परिणयार्हायाः वासवदत्तायाः, गान्धर्वे=संगीतशास्त्रे, अभिलाषः=मनोरथः, कथं=केन प्रकारेण, उत्पन्नः=संजातः ।

केनापि =येन केनापि, उद्घातेन=प्रसङ्गेन, काञ्चनमालां=एतन्नाम्नीं स्वसखीं, वीणायाः योग्यां वीणायोग्यां=वोणाऽभ्यासं, कुर्वंतीं, प्रेक्ष्य=समवलोक्य शिक्षितुकामासीत्=अध्ययनाभिलाषुका संजाता ।

बाल्यस्य=शैशवस्य, सदृशं=अनुरूपं विद्यते ।

महासेनमपि = भवन्तमपि, किमपि=किञ्चित् , विज्ञापयितुं कामो यस्याः सा विज्ञापयितुकामा=विनिवेदयितुमिच्छुका, अस्मि, अहमिति शेषः ।

---

राजा—सङ्गीत विद्या में इसकी रुची कैसे उत्पन्न हुई ?

देवी—किसी कारण से अपनी सखी काञ्चनमाला के समीप गई थी । उसको वीणा का अभ्यास करते देखकर इसकी भी रुचि वीणा सीखने की हो गई ।

राजा—यह अनुकरण की प्रवृत्ति बाल्यावस्था के अनुरूप है ।

देवी—राजा महासेन से मैं भी कुछ निवेदन करना चाहती हूँ ।

राजा—क्या कहना चाहती हो ?

देवी—आअय्यं इच्छामि त्ति । [ आचार्यमिच्छामीति । ]

राजा—उपस्थितविवाहकालायाः किमिदानीमाचार्येण । पतिरे-वैनां शिक्षयिष्यति ।

देवी—हं एसो दाणि मे दारिआए कालो । [ हम् एष इदानीं मे दारिकायाः कालः ]

राजा—भोः ! नित्यं प्रदीयतामित्यस्मानुपरुध्य किमिदानीं सन्तप्यसे ।

देवी—अणिप्पेदं मे पदाणं । विओओ मं सन्तावेदि ! अह कस्स

---

आचार्यं=वीणाशिक्षकम्, इच्छामि=अभिलषामि । उपस्थितविवाहका-लायाः=वासवदत्तायाः, इदानीं=अधुना आचार्येण=शिक्षकेन, किम्=नास्ति प्रयोजनम् । पतिरेव=अस्याः स्वामी एव, एनां=वासवदत्तां, शिक्षयिष्यति= अध्यापयिष्यति

हम्=इत्यस्वीकृतिसूचकं पदम्, एष इदानीं=साम्प्रतमेव, मे=मम, दारि-कायाः=बालिकायाः, कालः=परिणयसमयः ।

भोः=इति सम्बोधनम्, नित्यं=प्रतिवासरं, प्रदीयतां=तनयापरिणयं विधीयताम्, इति=एवंप्रकारेण, अस्मान्=मां महासेनंप्रति, उपरुध्य=अनुनयं विधाय, इदानीं=साम्प्रतं, किम्=कथं, सन्तप्यसे=शोकाकुलाऽसि ।

---

देवी—वीणा की शिक्षा देने के लिये एक आचार्य चाहती हूँ ।

राजा—अब इसके विवाह का समय सन्निकट आ गया है । इसको आचार्य से क्या प्रयोजन ? इसका पति ही इसको शिक्षित करेगा ।

देवी—हूँ, क्या यही मेरी पुत्री के विवाह का समय है ?
( अर्थात् अभी मेरी कन्या विवाह के योग्य नहीं है । )

राजा—अरे, तुम तो प्रतिदिन यही कहती थी कि मेरी कन्या का विवाह कर दो, अब क्यों सन्ताप कर रही हो ।

देवी—पुत्री का परिणय करना तो मुझे स्वीकार है किन्तु वियोग मुझे दुःख प्रदान कर रहा है । किसके साथ विवाह करने का निश्चय किया है ?

उण दिण्णा । [ अभिप्रेतं मे प्रदानम् । वियोगो मां सन्तापयति । अथ कस्मै पुनर्दत्ता । ]

राजा—न तावन्निश्चयो गम्यते ।

देवी—इदाणिं पि ण दाव । [ इदानीममपि न तावत् । ]

राजा—

अदत्ते त्यागता लज्जा दत्तेति व्यथितं मनः ।
धर्मस्नेहान्तरे न्यस्ता दुःखिताः खलु मातरः ॥ ७ ॥

सर्वथा श्वशुरपरिचरणसमर्थे वयसि वर्तते वासवदत्ता । एष चापरः काशिराजोपाध्याय आर्यजैवन्तिरद्य दौत्येन प्राप्तो विलोभयति मां

---

मे=मम, प्रदानं=कन्यापरिणयं, अभिप्रेतम्=इष्टम्, वियोगः=आत्मजा-विरहः, मां=वासवदत्ताजननीं, सन्तापयति=व्यथयति । अथ=अनन्तरं, कस्मै =वरविशेषाय, पुनः=भूयः दत्ता=दानाय निश्चिता ।

अन्वयः—अदत्ता इति लज्जा आगता दत्ता इति मनः व्यथितम् धर्मस्ने-हान्तरे न्यस्ताः मातरः दुःखिताः खलु ।

व्याख्या—अदत्तेति=अविवाहितासती, लज्जा=त्रपा, आगता=भवि-ष्यति, दत्तेति=परिणये कृते सति, मनः=मानसं, व्यथितम्=सन्तप्तम्, (अतः) धर्मस्नेहान्तरे=कर्तव्याकर्तव्ययोरन्तराले, निवेशिताः=निक्षिप्ताः, मातरः=जनन्यः, दुःखिताः कष्टान्विताः, खलु=निश्चयेन । अनुष्टु-व्वृत्तमत्र, ॥ ७ ॥

सर्वथा=सर्वतोभावेन, श्वशुरपरिचरणसमर्थे=श्वसुरसेवोपयुक्ते, वयसि= अवस्थायां, वासवदत्ता=तवात्मजा, वर्तते=विद्यते, एष च=अयं च,

---

राजा—अभी कोई निश्चय नहीं हुआ है ।

देवी—क्या अभी तक निश्चय नहीं हुआ ?

राजा—कन्यादान न करने से लज्जा आती है और कन्या का परिणय कर देने पर मन दुःखित होता है । इस तरह धर्म और स्नेह के मध्य पड़कर माताओं को बड़ा कष्ट होता है ॥ ७ ॥

वासवदत्ता की अवस्था अब सब प्रकार से सास-ससुर की सेवा करने के

चारित्रेण। (आत्मगतम्) न किञ्चिदाह। अश्रुपूर्वा व्याकुला कथं निश्चियं गमिष्यति। भवतु, निवेदयाम्यस्यै। (प्रकाशम्) श्रूयन्तेऽस्मत्सम्बन्धप्रयोजनायागता राजानः।

देवी–किं दाणि वित्थरेण। जहिं दइअ ण सन्तप्पामो, तहिं दीअदु। [किमिदानीं विस्तरेण। यत्र दत्वा न सन्तप्यामहे, तत्र दीयताम्।]

राजा—अहो महान् खलु लीलाभिहितो दुःखविस्तर इदानीं पश्चादुपालम्भनं श्रोतुम्। तस्माद् देवी तावन्निश्चयं गच्छतु। श्रूयताम्—

---

अपरः - अन्यः, काशिराजोपाध्यायः = काशिराजपुरोहितः, आर्यजैवन्ति= एतन्नामा, अद्य=अस्मिन्वासरे, दौत्येन=सन्देशवाहकेन, प्राप्तः = आगतः, मां = महासेनं, चारित्रेण=चारित्रगुणवैशिष्ट्येन, विलोभयति = चित्ताकर्षणं विदधाति, (आत्मगतं=मनसि) न किञ्चिदाह=वासवदत्ताजननी न किञ्चिद् ब्रूते, अश्रुपूर्वा व्याकुला = कन्यापरिणयप्रस्तावं समाकर्ण्याश्रु मुञ्चती, व्यथिता, कथं निश्चयं गमिष्यति = केन प्रकारेण निर्णयं विधास्यन्ति।

अहो = इति बिस्मयेऽर्थे, महान्=अतिदीर्घः, खलु = निश्चयेन, इदानीं= साम्प्रतं, दुःखविस्तरः = कष्टसमूहः, वरनिश्चयविषयककर्तव्यः, लीलया अभिहितः लीलाभिहितः = सरलतया निगदितः, पश्चात् = कन्यापरिणयानन्तरं, उपालम्भनं=भवत्यास्तनयाविषयकत्रुटिवचनं, श्रोतुम् =आकर्णयितुम्, तस्माद्=एतस्माद्धेतोः, देवी = भवती एव (वासवदत्ताजननी एव) तावत्,

---

योग्य है। दूसरी बात यह है कि काशीनरेश का पुरोहित आर्य जैवन्ति सन्देश वाहक बनकर मेरे पास आया है। वह भी राजा के सुन्दर चरित्र से मुझको लुभा रहा है। (अपने मन में) यह तो कुछ नहीं कह रही है। अश्रूपूरित नयनों से यह किस प्रकार निर्णय कर सकती है? (प्रकाश रूप में) सुनते हैं कि वासवदत्ता के विवाह के निमित्त हमसे सम्बन्ध करने के लिये अन्य राजा लोग आ रहे हैं।

देवी—इस समय अधिक विस्तारपूर्वक कहने से क्या लाभ? जिसे देकर पुनः पश्चाताप न करना पड़े, उसे कन्या प्रदान कीजिये।

राजा—अहा! कितने दुष्कर कार्य को तुमने ऐसा कहकर सरल बना

अस्मत्सम्बद्धो मागधः काशिराजो
वाङ्गः सौराष्ट्रो मैथिलः शूरसेनः ।
एते नानार्थैर्लोभयन्ते गुणैर्मां
कस्ते वैतेषां पात्रतां याति राजा ॥ ८ ॥
( प्रविश्य )

काञ्चुकीयः—वत्सराजः ।

---

निश्चयं = वरविषयकनिर्णय, गच्छतु = करोतु । श्रूयताम्=आकर्ण्यताम्—

अन्वयः—अस्मत्सम्बद्धः मागधः काशिराजः वाङ्गः सौराष्ट्रः मैथिलः शूरसेनः । एते नानार्थैः गुणैः माम् लोभयन्ते, एतेषाम् ते कः राजा पात्रताम् याति ।

व्याख्या—अस्मत्सम्बद्धः = अस्मत्सम्बन्धाभिलाषुकः, मागधः = मगध-भूपतिः, काशिराजः = काशिनरेशः, वा=अथवा, आङ्गः = आङ्गदेशनृपतिः, सौराष्ट्रः=सौराष्ट्राधिपतिः, मैथिलः=मिथिलानरेशः, शूरसेनः=एतन्नामको नरपतिः, एते = भुपतयः, नानार्थैः=नैकविधप्रकारकैः, गुणैः = राजोचित-सद्गुणैः, माम् = प्रद्योतम् , लोभयन्ते = आकृष्यन्ते, एतावता, एतेषां=भूप-तीनां मध्ये, ते = देव्याः, कः=अन्यतमः, राजा=नरपतिः, पात्रता=आत्मजा-परिणय-योग्यतां, याति = प्राप्नोति । त्वद्-जामातृयोग्यः क इति निवेदय-त्वित्याशयः । वैश्वदेवी नाम वृत्तमत्र तल्लक्षणं यथा—

वाणाश्वैश्छिन्ना वैश्वदेवी म मौ यौ । इति ॥ ८ ॥

---

दिया । परन्तु बाद में उसके लिये उलाहना ही सुननी होगी । अतएव हे देवि ! तुम्ही इस विषय में निर्णय करो । सुनो—

मगधाधिपति, काशीनरेश, अङ्गदेश का राजा, सौराष्ट्राधिप, मिथिला-नरेश और शूरसेन ये सब मेरी पुत्री वासवदत्ता से विवाह करना चाहते हैं । ये सब मुझे अपने अनेक विध गुणों से लोभित कर रहे हैं । इनमें तुम्हें वासव-दत्ता के योग्य कौन जान पड़ता है । अर्थात् तुम किससे अपनी पुत्री का परिणय करना चाहती हो ? ॥ ८ ॥

( प्रवेश कर )



कञ्चु०—वत्सराज !

राजा—किं वत्सराजः ।

काञ्चुकीयः—प्रसीदतु प्रसीदतु महासेनः । प्रियवचननिवेदनत्वरया क्रमविशेषो नावेक्षितः ।

राजा—प्रियवचवमिति ।

देवी—( उत्थाय ) जेदु महासेणो । [जयतु महासेनः । ]

राजा—( सहर्षम् ) प्रियवचनपरिहार्या हि देवी । आस्यताम् ।

देवी—जं महासेणो आणवेदि । (यद् महासेन आज्ञापयति । ) ( उपविशति । )

राजा—उत्तिष्ठोत्तिष्ठ, स्वैरमभिधीयताम् ।

काञ्चुकीयः—( उत्थाय ) तत्रभवतामात्येन शालङ्कायनेन गृहीतो वत्सराजः ।

राजा—( सहर्षम्) किमाह भवान् ।

---

प्रसीदतु=प्रसन्नो भवतु, प्रियवचननिवेदनत्वरया=मधुरवचनकथनक्षिप्रतया, क्रमविशेषः=समुदाचारनियमः, नावेक्षितः=नाङ्गीकृतः ।

जयतु=जयमधिगच्छतु, महासेनः=प्रद्योतः ।

सहर्षं=आनन्दमनुभवन् , आस्यताम् = उपविश्यताम् , स्वैरं=यथेच्छम्, अभिधीयताम्=कथ्यताम् । अमात्येन=सचिवेन, शालङ्कायनेन=एतन्नामकेन,

---

राजा—क्या कहा, वत्सराज !

कञ्चु०—महासेन ! प्रसन्न हों प्रसन्न हों । प्रियवचन कहने की शीघ्रता में मैंने क्रम विशेष का विचार नहीं किया ।

राजा—प्रियवचन !

देवी—( उठकर ) महासेन की जय हो !

राजा—( हर्ष के साथ ) बैठकर देवी भी प्रियवचन सुनें !

देवी—जैसी आप की आज्ञा । ( बैठती है )

राजा—उठो, उठो । भयरहित होकर कहो ।

कञ्चु०—( उठकर ) आपके सचिव शालङ्कायन ने वत्सराज उदयन को बन्दी बना लिया है ।

राजा—( हर्ष के साथ ) क्या कह रहे हो ?

काञ्चुकीयः—तत्रभवतामात्येन शालङ्कायनेन गृहीतो वत्सराजः ।

राजा—उदयनः ।

कञ्चुकीयः—अथ किम् ।

राजा—शतानीकस्य पुत्रः ।

कञ्चुकीयः—दृढम् ।

राजा—सहस्रानीकस्य नप्ता ।

कञ्चुकीयः—स एव ।

राजा—कौशाम्बीशः ।

काञ्चुकीयः—सुव्यक्तम् ।

राजा—गान्धर्ववित्तकः ।

काञ्चुकीयः—एवं ब्रुवन्ति ।

राजा—वत्सराजो ननु ।

---

गृहीतः=निबद्धः, वत्सराजः = उदयनः, पुत्रः = आत्मजः, नप्ता = पौत्रः, कौशाम्बीशः = कौशाम्बीनरेशः, गान्धर्ववित्तकः = संगीतविद्याविशारदः, उपरतः = पञ्चत्वं गतः, श्रद्धतां = विश्वस्यताम् ।

---

कञ्चु०—आपके अमात्य शालङ्कायन ने वत्सराज को पकड़ लिया है।

राजा—उदयन ।

कञ्चु०—और क्या ।

राजा—शतानीक का पुत्र ।

कञ्चु०—हाँ ।

राजा—सहस्रानीक का पौत्र ?

कञ्चु०—वही ।

राजा—कौशाम्बी का राजा ?

कञ्चु०—अवश्य ।

राजा—संगीत विद्या का ज्ञाता ।

कञ्चु०—लोग यही कहते हैं ।

राजा—वत्सराज ?

काञ्चुकीयः—अथ किं, वत्सराजः।

राजा—अथ किमुपरतो यौगन्धरायणः।

काञ्चुकीय—न खलु, कौशाम्ब्यां किल।

राजा—यद्येवं, न गृहीतो वत्सराजः।

काञ्चुकीय—श्रद्धत्तां महासेनः।

राजा—

न श्रद्दधाम्युदयनग्रहणं त्वयोक्तं
व्यावर्तनं करतलैरिव मन्दरस्य
यस्याहवेषु रिपवः कथयन्ति शौर्यं
यौगन्धरायणमतानि च नः स्वनन्ति ॥ ९ ॥

---

अन्वयः—त्वयोक्तम् उदयनग्रहणं करतलैः मन्दरस्य व्यावर्तनम् इव न श्रद्दधामि, यस्य आहवेषु रिपवः शौर्यं कथयन्ति, यौगन्धरायणमतानि च नः स्वनन्ति।

व्याख्या—त्वयोक्तं = भवता कथितम्, उदयनग्रहणं = उदयनपराधीनतां, करतलैः = हस्तैः, मन्दरस्य = मन्दराचलस्य, व्यावर्तनम् = चक्रवत् परिभ्रामणम्, इव = यथा, न = नहि, श्रद्दधामि = विश्वसिमि, यस्य = उदयनस्य, आहवेषु = रणेषु रिपवः = शत्रवः, शौर्यम् = पराक्रमम्, कथयन्ति =

---

कञ्चु०—और क्या! वत्सराज।

राजा—क्या यौगन्धरायण मर गया?

कञ्चु०—नहीं, वह कौशाम्बी में है।

राजा—यदि ऐसा है तो वत्सराज नहीं पकड़ा गया।

कञ्चु०—महाराज महासेन विश्वास करें?

राजा—वत्सराज के पकड़े जाने वाली तुम्हारी बात पर मैं उस प्रकार विश्वास नहीं करता, जिस प्रकार 'मन्दराचल पर्वत हाथ से पकड़कर घुमाया गया' यह बात असंभव और अविश्वसनीय है। अरिगण भी 'रणक्षेत्र में जिसके शौर्य एवं पराक्रम की परिचर्चा करते हैं, उसके मन्त्री यौगन्धरायण की कूटनीति आज भी हमारे कर्ण कुहरों को पूरित कर रही है ॥ ९ ॥

काञ्चुकीयः—प्रसीदतु महासेनः वृद्धोऽस्मि ब्राह्मणः खल्वहम् । न महासेनसमीपेऽनृतमभिहितपूर्वम् ।

राजा—आ अस्त्येतत् । अथ कः प्रियदूतः शालङ्कायनेन प्रेषितः ।

काञ्चुकीयः—न पुरुषः । जवातिशययुक्तेन खररथेन वत्सराजमग्रतः कृत्वा स्वयमेवामात्यः प्राप्तः ।

राजा—एवं प्राप्तः । हन्त भोः ! अद्य विमुक्तसन्नाहा सुखं विश्रा-

---

निगदन्ति, यौगन्धरायणमतानि च = यौगन्धरायणमन्त्रफलानि च, नः = अस्माकम्, ( कर्णे ) स्वनन्ति = गुञ्जन्ति, वसन्ततिलकावृत्तम्—'उक्ता वसन्ततिलकातभजा जगौ गः' इति लक्षणात् ॥ ६ ॥

प्रसीदतु = प्रसन्नो भवतु महासेनः = प्रद्योतः, वृद्धः = जरासंयुतः, ब्राह्मणः = विप्रः, खलु = निश्चयेन, अहम् = काञ्चुकीयः, अस्मि = वर्ते । महासेनसमीपे = भवदन्तिके, अनृतं = मृषा, न = नहि, अभिहितपूर्वम् = पूर्वोक्तम् ।

अस्त्येतत् = एवं विद्यते, कः प्रियदूतः = कः प्रियसन्देशवाहकः, शालङ्कायनेन = एतन्नामकेनामात्येन, प्रेषितः = सम्प्रेषितः ।

जवातिशययुक्तेन = वेगातिशयगामिना, खररथेन = दृढ़स्यन्दनेन, वत्सराजमग्रतः कृत्वा = वत्सराजमादाय, स्वयमेव = आत्मनैव, अमात्यः = सचिवः, प्राप्तः = समागतः ।

हन्त भोः = हर्षान्वितसन्तोषवचनमिदम् । अद्य = अस्मिन् दिने, विमुक्तः

---

कञ्चु०—महासेन प्रसन्न हो, मैं वृद्ध ब्राह्मण हूँ । आपके सामने पहले कभी मिथ्या भाषण नहीं किया ।

राजा—हाँ, यह तो है । कौन-सा दूत शालङ्कायन ने भेजा है ।

कञ्चु०—किसी पुरुष को नहीं । किन्तु मन्त्री शालङ्कायन स्वयं वेगगामी रथ पर आरूढ हो वत्सराज को आगे कर यहाँ पधारे हैं ।

राजा—इस प्रकार वह स्वयं आये हैं, तो आज हमारी सेना कवच उतार कर विश्राम करे । आज से मेरे समीप प्रच्छन्न रूप से दूत भेजने वाले नृपतिगण निःशङ्क हो जायेंगे । संक्षेपतः आज मैं यथार्थ में महासेन हूँ ।

ऽयत्वक्षौहिणी। अद्यप्रभृति प्रच्छन्नकृतदूतसम्प्रेषणा अशङ्कि स्थास्यन्ति राजानः। एष समासः—अद्यास्मि महासेनः।

देवी—किं अमच्चेण आणीदो। [ किममात्येनानीतः। ]

राजा—अथ किम्।

देवी—एदण्णिमित्तं कस्स वि ण दिस्सामो वासवदत्तं। [ एतं मित्तं कस्मा अपि न दित्सामो वासवदत्ताम्। ]

राजा—युद्धावजितशत्रुः खल्वेष मम। बादरायण! शालङ्का क्व?

काञ्चुकीयः—आहितो भद्रद्वारे।

राजा—गच्छ। भरतरोहकं ब्रूहि-कुमारविधिविशिष्टेन सत्का वत्सराजमग्रतः कृत्वा प्रवेश्यताममात्य इति।

---

सन्नाहो यया सा विमुक्तसन्नाहा = परित्यक्तकवचा, अक्षौहिणी=सेना, सानन्दं, विश्रम्यताम्=विश्राममधिगम्यताम्, अद्यप्रभृति=अद्यारभ्य, प्रच्छ गुप्तं यथा स्यात्तथा कृता दूतसम्प्रेषणा यैः ते प्रच्छन्नकृतदूतसम्प्रेषणाः गुप्तरूपविहितचरविनिमयाः, राजानः = भूपतयः, अशङ्किताः = निर्भ स्थास्यन्ति = भविष्यन्ति, एष समासः=अयं सन्तोषवचनसंक्षेपः, महासे दीर्घसेनासम्पन्नपदभाक्, अद्यास्मि=अद्याहं संजातः।

कुमारविधिविशिष्टेन = राजकुमारानुरूपेण, सत्कारेण = सम्मानेन।

---

देवी—क्या मन्त्री स्वयं लाये हैं।

राजा—हाँ, और क्या?

देवी—इसी निमित्त मैं वासवदत्ता को किसी अन्य के लिये देना चाहती।

राजा—वह निश्चय ही युद्ध में विजित मेरा शत्रु है। बादराय शालङ्कायन कहाँ है?

कञ्चु०—भद्रद्वार पर स्थित हैं।

राजा—जाओ, भरतरोहक से बोलो कि राजकुमार के सदृश सत्का पूर्वक वत्ससेन को आगे करके अमात्य को भीतर लावे।

काञ्चुकीयः—यदाज्ञापयति महासेनः ।

राजा—एहि तावत्

काञ्चुकीयः—अयमस्मि ।

राजा—वत्सराजदर्शने कश्चिन्नोत्सारयितव्यः ।

शत्रुं पश्यन्तु मे पौराः श्रुतपूर्वं स्वकर्मभिः ।
सिंहमन्तर्गतामर्षं यज्ञार्थमिव संयतम् ॥ १० ॥

काञ्चुकीयः—यदाज्ञापयति महासेनः । ( निष्क्रान्तः )

देवी—बहूणि अब्भुदआणि इमस्सिं राअउले अणुभूदाणि । ण खु अहं ईदिसं पोदिजोग्गं महासेणस्स सुमरामि । [ बह्वोऽभ्युदया अस्मिन्

---

वत्सराजस्यदर्शने इति वत्सराजदर्शने = उदयनदर्शने, कश्चित्=कोऽपि, नोत्सारयितव्यः=न निषेध्यः ।

अन्वयः—स्वकर्मभिः श्रुतपूर्वं मे शत्रुं यज्ञार्थं संयतम्=अन्तर्गतामर्षं सिंहम् इव पौराः पश्यन्तु ।

व्याख्या—स्वकर्मभिः = निजबलाधिक्यैः, श्रुतपूर्वं=पूर्वप्रथितम् , मे = मम, शत्रुं = रिपुं, यज्ञार्थं = मखनिमित्तं, संमतं=निबद्धम् , अन्तर्गतामर्षं= हृदयस्थकोपम् , सिंहं=मृगाधिपम् , इव=यथा, पौराः=पुरवासिनः, पश्यन्तु= अवलोकयन्तु । अनुष्टुब्वृत्तमत्र ॥ १० ॥

अस्मिन्=भवत्सम्बन्धिनि, राजकुले=राजवंशे, बहवः = नैकविधानि,

---

कञ्चु०—जैसी महाराज महासेन की आज्ञा ।

राजा—पुनः आओ ।

कञ्चु०—यह मैं हूँ ।

राजा—वत्सराज के दर्शन से किसी को वंचित न किया जाय । अपनी वीरता के कारण प्रसिद्ध मेरे शत्रु को नगरवासी जन उसी प्रकार देखें, जैसे कि यज्ञ के लिये बँधे हुए अपने भीतर क्रोध को छिपाये सिंह को लोग देखते हैं ॥ १० ॥

कञ्चु०—महाराज महासेन की जैसी आज्ञा । ( निकल जाता है । )

देवी—इस राजवंश में अनेक अभ्युदय पूर्ण घटनाएँ मैंने देखी किन्तु आपको इतना प्रसन्न करने वाली बात का मुझे स्मरण नहीं है ।

राजकुलेऽनुभूताः । खल्वहमीदृशं प्रीतियोग्यं महासेनस्य स्मरामि ।]

राजा—अहमप्येतादृशं प्रीतिविशेषं न श्रुतपूर्वं स्मरामि, गृहीतो वत्सराज इति ।

देवी—वच्छराओ णं । [ वत्सराजो ननु ]

राजा—अथ किम् ।

देवी—बहूणि सम्बन्धप्पओअणागदाणि राअउलाणि सुदाणि । एदिणा ण पेसिदपुरुवो पुरुसो । [ बहूनि सम्बन्धप्रयोजनागतानि राजकुलानि श्रुतानि । एतेन न प्रेषितपूर्वः पुरुषः । ]

राजा—देवि ! महासेनशब्दमपि न गणयति, किं सम्बन्धमभिलषति ।

---

अभ्युदयाः = ऐश्वर्याणि, अनुभूताः = अधिगतानि, ( परन्तु ) न = खलु = निश्चयेन, अहम् = देवी, ईदृशं = एवंविधम्, प्रीतियोग्यं = सन्तोषोत्पादकं स्थानं, महासेनस्य = भवतः, स्मरामि । अर्थात् कस्मिन्नपि प्रसङ्गावसरे भवानेवं नानन्दितवान् ।

बहूनि = अनेकानि, सम्बन्धप्रयोजनागतानि = आत्मजासम्बन्धहेतुप्रयुक्तानि, राजकुलानि = नृपकुमाराः, एतेन = वत्सराजेन, न प्रेषितपूर्वः पुरुषः = सन्देशहरो न प्राक् प्रेषितः ।

महासेनशब्दमपि = मामपि, न गणयति = न श्रद्धाति, सम्बन्धं = परिणयं, किमभिलषति = किमिच्छति, न वाञ्छतीत्याशयः । बालः = मूर्खः

---

राजा—मुझे भी इस तरह का शुभ संवाद पहले कभी सुनने में आया जैसा कि 'वत्सराज पकड़ा गया' यह ।

देवी—वत्सराज !

राजा—हाँ ।

देवी—वासवदत्ता से परिणय करने के निमित्त बहुत से राजाओं ने दूत भेजे, परन्तु इसने किसी दूत को नहीं भेजा ।

राजा—देवि ! यह महासेन शब्द को कुछ नहीं जानता, तो सम्बन्ध करने की बात ही क्या है ?

देवी—ण गणेदि। किं बालो अपण्डिदो वा। [ न गणयति। किं बालः अपण्डितो वा। ]

राजा—बालः, न त्वपण्डितः।

देवी—किण्णु हु एण उत्सेअअदि। [ किन्नुखल्वेनमुत्सेकयति।]

राजा—उत्सेकयत्येनं प्रकाशराजर्षिनामधेयो वेदाक्षरसमवायप्रविष्टो भारतो वंशः। दर्पयत्येनं दायाद्यागतो गान्धर्वो वेदः। विभ्रमयत्येनं वयस्सहजं रूपम्। विस्रम्भयत्येनं कथमप्युत्पन्नोऽस्य पौरानुरागः।

देवी—अभिलसणीआ वरगुणा। कस्स वामदाए दोसो संवुत्तो।

अपण्डितः=मूर्खः, वा=अथवा। उत्सेकयति=दर्पयति, एनं = राजानमुदयनं, प्रकाशराजर्षिनामधेयः=प्रथितराजर्षिनामा, अर्थात् यस्मिन् कुले सुप्रसिद्धाः राजर्षयः संजाताः। भारतो वंशः = यश्च वंशः, वेदाक्षरसमवायप्रविष्टः = वेदरूपवर्णसमूहे समुच्चरितः। दर्पयति=गर्ववन्तं करोति, एनम्=उदयनम्, दायाद्यागतः=वंशपरम्परातोऽधिगतः, गान्धर्ववेदः = संगीतविद्या प्रवीणता, वयस्सहजं = अवस्थानुरूपं, रूपं = सौन्दर्यम्, एनम्=उदयनम्, विभ्रमयति = उत्सेकयति, कथमपि=केनापि प्रकारेण, उत्पन्नः = संजातः, अस्य= उदयनस्य, पौरानुरागः=प्रजास्नेहः, एनम्=उदयनम्, विस्रम्भयति=विश्वासं समुत्पादयति।

देवी—नहीं समझता ! यह ऐसा बाल्यावस्था के कारण करता है या मूर्खतावश ?

राजा—यह बालक तो है किन्तु मूर्ख नहीं।

देवी—इसे किस बात का दर्प है ?

राजा—जिस कुल में अनेक प्रसिद्ध राजर्षि जन्म ग्रहण कर चुके हैं, जिसकी चर्चा श्रुतियों में भी है, वह भरतवंश इसे गर्वान्वित करता है, कुल-परम्परा से प्राप्त संगीत विद्या इसे अभिमानी बना रही है। अवस्था के योग्य इसकी सुन्दरता इसके दर्प को बढ़ा रही है, पुरवासियों का प्रेम इसमें आत्मविश्वास बढ़ा रहा है।

देवी—ये तो गुण वर में आवश्यक हैं किस कुल के अवाञ्छनीय होने से

[अभिलाषणीया वरगुणाः । कस्य वामतया दोषः संवृत्तः ।]

राजा—देवी ! किमिदानीमस्थाने विस्मितासि ।

पश्य—

अग्निः कक्ष इवोत्सृष्टो दहत् कात्स्न्र्येन मेदिनीम् ।
अस्य मे शासनं दीप्तं विषयान्तेऽवसीदति ॥ ११ ॥

( प्रविश्य )

काञ्चुकीयः—जयतु महासेनः । यथाज्ञाप्रयुक्तसत्कारं प्रवि

---

अभिलाषणीया=वाञ्छनीयाः, वरगुणाः=जामातृसद्गुणाः, कुलीन दयः इति विद्यन्त इति शेषः, कस्य=दोषविशेषस्य, वामतया = प्रतिकूलत दोषः संवृत्तः=दोषत्वमधिगतः ।

किमिदानीमस्थाने=साम्प्रतं कथं निरर्थकं, विस्मितासि=चकितासि

अन्वयः—कक्षे उत्सृष्टः अग्नि इव मेदिनीं कात्स्न्र्येन दहत् मे दी शासनम् अस्य विषयान्ते अवसीदति ।

व्याख्या—कक्षे = तृणगुल्मे, उत्सृष्टः = परिक्षिप्तः, अग्निः=अन इव = यथा, मेदिनीं = धरां, कात्स्न्र्येन=समग्ररूपेण, दहत्=अभिज्वलय मे = मम, दीप्तं = समिद्धं, शासनं = आदेशः, अस्य=उदयनस्य, विषयान्ते जनपदसीमायाम् , अवसीदति=प्रसारं नाधिगच्छति । अनुष्टुब्वृत्तमत्र ॥११

यथाज्ञाप्रयुक्तसत्कारं = भवदाज्ञानुरूपविहितसम्मानः, प्रविष्टः = आ गतः, शालङ्कायनः = एतन्नामकोऽमात्यः । स = सचिवः, विज्ञापयति

---

ये सब दोष रूप में परिणत हो रहे हैं।

राजा—देवि ! तुम इस विषय में आश्चर्य क्यों कर रही हो। देखो

तृणसमूह में प्रक्षिप्त अग्नि के समान सम्पूर्ण पृथ्वी को भस्म करता हु मेरा शासन इसके राज्य में नहीं चलता। ( सारांश यह कि इतना प्रता शाली राजा है कि यह मुझे कुछ नहीं समझता ) ॥ ११ ॥

( प्रवेश कर )

कञ्चु०—महासेन की जय हो। आपकी आज्ञानुसार सत्कारपू शालङ्कायन आए हुए हैं। उन्होंने सूचित किया है कि भरतकुल में समुद

शालङ्कायनः। स तु विज्ञापयति-इदं भरतकुलोपभुक्तं वत्सराजकुले द्रष्टव्यं घोषवती नाम वीणारत्नम्। महासेनः प्रतिग्राहयितव्य इति। ( वीणां दर्शयति। )

राजा—प्रतिगृहीतं जयमङ्गलम् ( वीणां गृहीत्वा ) इयं सा घोषवती नाम। यैषा,

श्रुतिसुखमधुरा स्वभावरक्ता करजमुखोल्लिखिताग्रघृष्टतन्त्री।
ऋषिवचनगतेन मन्त्रविद्या गजहृदयानि बलाद्वशीकरोति॥१२॥

---

संसूचयति, भरतकुलोपभुक्तं = भरतवंशोद्भवराजभिः वादितम्, वत्सराजकुले = उदयनान्वये, द्रष्टव्यं=दृष्टिप्रियं, वीणारत्नं = तन्त्रीरूपमणिः, प्रतिग्राहयितव्याः = दातव्यः, प्रतिगृहीतम्=अङ्गीकृतं, जयमङ्गलम्=विजयस्वरूपम्, इयं सा = सुप्रथिता, घोषवती नाम=एतन्नामिका वीणा।

अन्वयः—श्रुतिसुखमधुरा स्वभावरक्ताकरजमुखोल्लिखिताग्रघृष्टतन्त्री ऋषिवचनगता मन्त्रविद्या इव गजहृदयानि बलाद् वशीकरोति।

व्याख्या—श्रुतिसुखेन मधुरा श्रुतिसुखमधुरा = कर्णानन्दप्रिया, स्वभावरक्ता = निसर्गरागाख्यधर्मवती, करजमुखोल्लिखिताग्रघृष्टतन्त्री = नखाग्रभागस्पृष्टाग्रतन्त्री, ऋषिवचनगता = मुनिवाणी विलसिता, मन्त्रविद्या = तन्त्रविद्या, इव = यथा, गजहृदयानि = हस्तिमनांसि, बलात् = प्रसभं, वशीकरोति=स्वायत्तीकरोति। पुष्पिताग्रावृत्तम्। तल्लक्षणं यथा—'अयुजि नयुगरेफतोयकारो, युजि च नजौ जरगाश्च पुष्पिताग्रा'। इति॥ १२॥

---

राजाओं के द्वारा उपभुक्त एवं वत्सराज कुल की प्रिय यह घोषवती नाम की श्रेष्ठ वीणा है। इस महासेन को दे दी जाय। (वीणा को दिखाता है।)

राजा—जयमंगल ( वीणारत्न ) स्वीकार कर लिया गया। (वीणा लेकर ) यह वही घोषवती नाम की वीणा है। जो—

कानों को सुख प्रदान करने के कारण सुन्दर तथा निसर्गतः अनेकविध रागों को निकालने वाली और नखाग्र भाग से जिसके तार बजाये जाते हैं, ऐसी यह वीणा ऋषियों के वचन के अन्तर्गत मन्त्र विद्या की तरह हाथियों के हृदय को बलात् वश में कर लेती है॥ १२॥

भोः ! समरावजितानां रत्नानामिष्टजनसम्भोगः प्रीतिमुत्पादयति ।

अर्थशास्त्रगुणग्राही ज्येष्ठो गोपालकः सुतः ।
गान्धर्वद्वेषी व्यायामशाली चाप्यनुपालकः ॥ १३ ॥

क्व नु खल्वियं सुन्यस्ता भवेत् ? देवि ! वासवदत्ता वीणामुपक्रान्ता ननु ?

देवी—आम्

राजा—तेन हि इयमस्यै प्रदीयताम् ।

---

भोः = इति सम्बोधनम्, समरे अवजितानां समरावजितानां=संग्रामे स्वायत्तीकृतानां, रत्नानां=मणीनां, इष्टजनसम्भोगः = प्रियजनकर्तृकोपभोगः, प्रीतिमुत्पादयति=आनन्दं ददाति ।

अन्वयः—ज्येष्ठः सुतः गोपालकः अर्थशास्त्रगुणग्राही, च अस्य अनुपालकः च व्यायामशाली, गान्धर्वद्वेषी (ममसुतइतिशेषः) ।

व्याख्या—ज्येष्ठः=प्रथमः, सुतः = आत्मजः, गोपालकः = एतन्नामकः, अर्थशास्त्रगुणग्राही = राजविद्यागुणज्ञाता, च = तथा, अस्य=गोपालकस्य, अनुपालकः = अनुजः, व्यायामशाली = मल्लविद्याभ्यासकारकः, गान्धर्वद्वेषी=संगीतविद्यायामरसिकः, च वर्तत इति शेषः । अनुष्टुब्वृत्तमत्र ॥१३॥

इयं=वीणा, क्व=कुत्र, सुन्यस्ता=सुष्ठुनिक्षिप्ता, भवेत्=स्यात्, वासवदत्ता = ममात्मजा, वीणां=तन्त्रीम्, उपक्रान्ता=अभ्यसितुमारब्धवती, ननु = इति प्रश्ने, किमित्याशयः । अस्यै=वासवदत्तायै ।

---

संग्राम में जीते गये रत्नों का श्रेष्ठ सुहृदगण द्वारा उपभोग आनन्द प्रदान करता है ।

मेरा ज्येष्ठ पुत्र गोपालक अर्थशास्त्र का ज्ञाता है, उससे छोटा संगीत-विद्या में अरुचि रखनेवाला और व्यायाम प्रेमी है ॥ १३ ॥

इस वीणा को किसे दिया जाय ! देवि ! वासवदत्ता क्या वीणा का अभ्यास करने लगी है ?

देवी—हाँ ।

राजा—इसलिये इसी को यह वीणा दिया जाय ।

देवी—वीणाप्पनाणेण भूओ वि उन्मत्ती विअ चिट्ठदि। [वीणाप्रदानेन भूयोऽप्युन्मत्तेव तिष्ठति।]

राजा—क्रीडतु क्रीडतु। नैतत् सुलभं श्वशुरकुले। बादरायण! क्व सा?

कञ्चुकीयः—अमात्येन सहोपविष्टा।

राजा—अथ वत्सेश्वरधिकृतः।

काञ्चुकीयः—आहितविनयत्वात् पादयोरङ्गे तस्य बहुप्रहारत्वाच्च स्कन्धबाह्येन शयनीयेन मध्यमगृहे प्रवेशितः।

राजा—हा धिग्!! बहुप्रहारः। एष इदानीं निरुपस्कृतस्य तेजसो दोषः। नृशंसः खल्वस्मिन् काल उपेक्षितवान्। बादरायण! गच्छ। भरतरोहकं ब्रूहि—क्रियतामस्य व्रणप्रतिकर्मेति।

---

विनीयते अनेनापराधीति विनयः (इहनिगडः 'बेड़ी' इति लोके प्रसिद्धः) स आहितः प्रक्षिप्तः यस्य सः तस्य भावः तस्मात् आहितविनयत्वात्=शृङ्खलानिबद्धत्वात्, पादयोः=चरणयोः।

हा धिग्! इति खेदे। एष=अयं, इदानीं = साम्प्रतं, निरुपस्कृतस्य = अप्रतिहतसंस्कारस्य, तेजसः = ओजसः, दोषः = त्रुटिः। नृशंसः = क्रूरः, बादरायण! इति सम्बोधनम्, गच्छ=व्रज, भरतरोहकं=एतन्नामकं, ब्रूहि=

---

देवी—वीणा प्राप्त करने से तो वह और उन्मत्त हो जायगी।

राजा—खेलने दो, खेलने दो। ससुराल में ये सब सुलभ नहीं होंगे। बादरायण वह कहाँ है?

कञ्चुकी—अमात्य के साथ बैठी है।

राजा—वत्सराज कहाँ है?

कञ्चुकी—पैरों में बेड़ी पड़ी होने से और शरीर पर अधिक प्रहार के कारण पालकी में बैठाकर उसे मध्यमगृह में भेज दिया गया है।

राजा—हाय! इतना अधिक प्रहार! यह उसके अप्रतिहत तेज का दोष है। इस समय उसकी उपेक्षा करना नृशंसता होगी। बादरायण! भरतरोहक से जाकर कहो कि उसके चोटों (घावों) की चिकित्सा करें।

काञ्चुकीयः—यदाज्ञापयति महासेनः ।

राजा—अथवा एहि तावत् ।

काञ्चुकीयः—अयमस्मि ।

राजा—अस्य सर्वदर्शनमविमुक्तसत्कारमवगन्तव्यम् । आकार-सूचिता अस्य प्रीतयो विज्ञेयाः । अतिक्रान्तविग्रहाश्रिताः कथा न कथयितव्याः । क्षुतादिप्रयोगेष्वाशिषोऽभिधेयाः । कालसंवादिना स्तवेनार्च्यः ।

काञ्चुकीयः—यदाज्ञापयति महासेनः । ( निष्क्रम्य प्रविश्य ) जयतु महासेनः । पथ्येव कृतव्रणप्रतिकर्मा वत्सराजः । अकालस्तावदिदानीं

---

कथय, क्रियताम् = विधीयताम् , अस्य = उदयनस्य, व्रणप्रतिकर्मा = व्रण-चिकित्सा, इति ।

अस्य = उदयनस्य, सर्वदर्शनम् = अशेषशास्त्रदृष्टिः, अविमुक्तसत्कारम् = बहुमानपुरस्सरम् , अवगन्तव्यम् = ज्ञातव्यम् । आकारसूचिता = चेष्टाभि-व्यंक्ताः, प्रीतयः = मनोरथाः, विज्ञेयाः = अवगन्तव्याः, अतिक्रान्तविग्रहा-श्रिताः = व्यतीतरणसम्बन्धिन्यः, कथा = वृत्तान्ताः, न = नहि, कथयितव्याः = निगदितव्याः, क्षुतादिप्रयोगेषु = क्षुतं नासिकाजन्यक्रियाविशेषं, ( 'छींक' इति लोके प्रथिताः ) तेषु प्रयोगेषु = तेन विहितेषु, आशिषोऽभिधेयाः = मङ्गल-वचनं निगदितव्यम् । कालसंवादिना = अवसरानुरूपेण, स्तवेन = स्तुत्या, अर्च्यः = पूज्यः ।

पथ्येव = मार्ग एव, कृतं व्रणप्रतिकर्म यस्य सः कृतव्रणप्रतिकर्मा =

---

कञ्चुकी—महाराज की जैसी आज्ञा ।

राजा—अथवा यहाँ आओ ।

कञ्चुकी—यह मैं हूँ ।

राजा—उसका समुचित सत्कार करना । उसकी भावभंगिमा से ज्ञात कर लेना कि वह क्या चाहता है । बीते हुए रण की चर्चा न करना । जब उसे जँभाई या छींक आवे तो आशीर्वादात्मक मङ्गल वचन कहना । समया-नुसार स्तुति से उसकी पूजा करना ।

कञ्चुकी—जैसी महासेन की आज्ञा । (निकलकर और पुनः प्रवेशकर)

द्वितीयस्य प्रतिकर्मण इति। मध्याह्नमारोहति दिवाकरः।

राजा—अथ कस्मिन् प्रदेशे वीरमानी ?

काञ्चुकीयः—मयूरयष्टिमुखे।

राजा—हा धिग्, अनाश्रयणीयः खल्वयं देशः। आतपप्रातिकूल्यार्थं मणिभूमिकायां प्रवेशयेत्याज्ञापय।

कञ्चुकीयः—यदाज्ञापयति महासेनः। (निष्क्रम्य प्रविश्य) यदाज्ञप्तं महासेनेन तत् सर्वमनुष्ठितम्। अमात्यस्तु भरतरोहको महासेनं द्रष्टुमिच्छति।

---

सम्पादितमभिघातोपचारादिककर्म, वत्सराजः=उदयनः। द्वितीयस्य व्रणप्रतिकर्मणः = अन्योपचारस्य, इदानीं=साम्प्रतम्, अकालः = अनवसरः, मध्याह्नम् = वासरमध्यम्, आरोहति=विराजते, दिवाकरः=भास्करः।

कस्मिन्-कुत्र, प्रदेशे = स्थलविशेषे, वीरमानी = शौर्यान्वितः।

मयूरस्थित्यर्थम् यष्टयो यत्र स्थापिताः स सौधविशेषः, तस्य मुखे मयूरयष्टिमुखे=अग्रिमकक्ष्यायाम्।

हा धिग् ? इति खेदे, न आश्रयणीयः अनाश्रयणीयः = निवासानुपयुक्तः, खलु = निश्चयेन, अयं=इदं, देशः = स्थलम्। आतपप्रातिकूल्यार्थं = आतपवारणार्थं, मणिभूमिकायां = रत्नप्रचुरकक्ष्यायाम्, प्रवेशय = राजानं निवासय।

यदाज्ञप्तं=भवद्भिः यत् समादिष्टं, तत्सर्वमनुष्ठितं=तदशेषमाचरितम्,

---

महासेन की जय हो। वत्सराज की व्रण चिकित्सा मार्ग में ही हो गई है। अब दूसरी बार चिकित्सा करने का यह समय नहीं है। भगवान् भास्कर मध्य आकाश में विराज रहे हैं। अर्थात् दोपहर हो गया है।

राजा—वह मानी वीर इस समय कहाँ है ?

कञ्चुकी—मयूरयष्टि नामक भवन के अग्रभाग में।

राजा—ओह ! वह स्थान रहने योग्य नहीं है। आतप से त्राण पाने के लिये उसे मणिमय भाग में ठहराये, ऐसी मेरी ओर से आज्ञा दो।

कञ्चुकी—महासेन की जैसी आज्ञा। (निकलकर और प्रवेशकर)

राजा—व्यक्तं न रोचते तस्मै वत्सराजसत्क्रिया। अस्यैष नीतेः परिश्रमः। अहमेवैनमनुनयामि।

देवी—किं सम्बन्धो णिच्चिदो ? [ किं सम्बन्धो निश्चितः। ]

राजा—न तावन्निश्चयो गम्यते।

देवी—अलं दाणि तुवरिअ। बाला मे दारिआ। [ अलमिदानीं त्वरित्वा। बाला मे दारिका। ]

राजा—यदभिरुचितं भवत्यै। प्रविशत्वभ्यन्तरम्।

देवी—जं महासेणो आणवेदि। ( निष्क्रान्ता सपरिवारा। ) [ यन्महासेन आज्ञापयति। ]

राजा—( विचिन्त्य )

---

अमात्यः = सचिवः, तु=किन्तु, भरतरोहकः=एतन्नामकः, महासेनं=भवन्तं, द्रष्टुमिच्छति = द्रष्टुमभिलषति।

व्यक्तं = सुस्पष्टं, तस्मै=भरतरोहकाय सचिवाय, वत्सराजसत्क्रिया = उदयनादरः, न रोचते=सुष्ठु न प्रतिभाति। अस्य नीतेः = अमात्यस्य नीतेरेव, एष=अयम्, परिश्रमः = उदयनग्रहणम्, अहमेव = महासेनैव, एनं= भरतरोहकं, अनुनयामि = प्रसादयामि।

अन्वयः—पूर्वं तावत् अस्य अवलेपात् मे वैरम्, आनीते अस्मिन्

---

आप महासेन ने जैसी आज्ञा दी थी उसके अनुसार सब कर दिया गया। मंत्री भरतरोहक आप महासेन का दर्शन करना चाहते हैं।

राजा—सुस्पष्ट है कि उसे वत्सराज का यह सम्मान अच्छा नहीं लग रहा है। उसी की नीति का यह परिणाम है कि वत्सराज पकड़ा गया। मैं उसे समझाऊँगा।

देवी—क्या विवाह सम्बन्ध निश्चित हो गया ?

राजा—अभी निश्चित नहीं हुआ है।

देवी—अब शीघ्रता न करें। अभी मेरी लड़की छोटी है।

राजा—जो तुम्हें रुचिकर हो, वही करो। अन्दर चलो।

देवी—जैसी महासेन की आज्ञा। ( परिवार सहित निकल जाती है )

राजा—( सोचकर )

पूर्वं तावद् वैरमस्यावलेपा-
दानीतेऽस्मिन् स्यात् तु मध्यस्थता मे ।
युद्धक्लिष्टं संशयस्थं विपन्नं
श्रुत्वा त्वेनं संशयं चिन्तयामि ॥ १४ ॥

( निष्क्रान्तौ ।

इति द्वितीयोऽङ्कः ।

---

मध्यस्थता स्यात् , युद्धक्लिष्टं विपन्नम् एनं संशयस्थं श्रुत्वा संशयं चिन्तयामि ।

व्याख्या—पूर्वं तावत् = आनयनात् प्राक्, अस्य = उदयनस्य, अवलेपात् = गर्वात् , मे = मम, वैरं = शत्रुत्वम्, आसीत्, आनीते तु = बद्ध्वा समानीते तु, अस्मिन् = उदयने, मध्यस्थता = समत्वम् आसीदिति शेषः, तु = किन्तु, युद्धक्लिष्टं = संग्रामपीडितम् , विपन्नं = विपद्ग्रस्तम् , एनम् = उदयनम् , संशयस्थं = जीवनसन्देहविषयीभूतं, श्रुत्वा = निशम्य, संशयं = सन्देहं, चिन्तयामि = अनुशोचामि, ममापि चिन्ता वर्तते यत् न जीवति न वेत्याशयः । शालिनी नाम वृत्तम् । तल्लक्षणं यथा—'मात्तौ गौ चेच्छालिनी वेदलोकैः' । इति ।

---

पहले तो इसके दर्प के कारण मेरी शत्रुता थी । इसको यहाँ बन्दी बनाकर ले आने पर मैं तटस्थ हो गया । किन्तु रण में सम्पीडित और विपद्ग्रस्त तथा संशय में पड़े हुए सुनकर मैं भी चिन्तित हूँ । कि वह जीवित है या मर गया ॥ १४ ॥

( दोनों निकल जाते हैं )

॥ दूसरा अङ्क समाप्त ॥

# अथ तृतीयोऽङ्कः

( ततः प्रविशति डिण्डिकवेशो विदूषकः ।

विदूषकः—( निरूप्य ) भो ! देवउलपीठिआए मम मोदअमल्लअं णिविखविअ दक्खिणामासआणि गणिअ बन्धिअ पडिणिवुत्तो दाणि मोदअमल्लअं ण पेक्खामि । (विचिन्त्य) आ ! एकमोदअपरितोसिदो ण दाव ओलग्गो मं अणुसरदि । उच्चदाए पाआरस्स अगई कुक्कुराणं । अक्खदभत्तदाए अलोहणीअं पहिआणं । आदु अपि णं खाआमि । भोदु ओग्गारइस्सं दाव अहं । ही ही बुड्ढो विअ सूअरवत्थी सुद्धवादं एव्व उग्गिरामि । अहव लोहिदकच्चा अणीए केरअं त्ति करिअ सिवेण पडिहत्थीकिदं भवे । ( निरूप्य ) जदि वि एसो बम्हआरी बहुकेहि रूवेहि अविणअं करेदि । भोदु पेक्खिस्सं दाव अहं । भो ! एवं खु मम मोदअमल्लअं सिवस्स पादमूले चिट्ठई । जाव णगह्णामि । देहि भट्टा ! देहि मे मोदअमल्लअं ? भट्टा ! तुवं वि मम चोरो सि

---

डिण्डिकस्येव वेषो यस्य सः डिण्डिकवेषः । यो विकृतवेषभाषणादिना जनस्य हास्यं जनयद् भिक्षामर्जयति स डिण्डिक इति जनैरभिधीयते ।

---

( तदनन्तर डिण्डिकवेशधारी विदूषक प्रवेश करता है । )

विदूषक—अरे शिवमन्दिर के चबूतरे पर मैं अपना सुन्दर लड्डू रखकर दक्षिणा में प्राप्त किये हुए स्वर्ण खण्डों को गिनकर और बाँधकर ( चला गया था ) पर लौटकर मैं उन लड्डुओं को नहीं देखता हूँ । ( वह भिखारी भी ) जो एक लड्डू खाकर सन्तुष्ट हो गया था, मेरे पीछे-पीछे नहीं आया । चहार दिवारी के ऊँचे होने के कारण कुत्तों का आगमन भी यहाँ नहीं हो सकता । पथिक जन भी इसे नहीं लेंगे, क्योंकि उनके पास खाने की पर्याप्त सामग्री है, अथवा मैंने ही उसे न खा डाला हो । अच्छा, अब मैं उगलता हूँ । अरे ! मेरे उगलने से तो केवल निर्मल वायु ही निकल रही है जैसे कि फूले हुए सूकर के पेड़ू से शुद्ध वायु निकलती है । अथवा चामुण्डा की वस्तु को अपनी वस्तु समझकर भगवान शंकर ने उसे ग्रहण न

अविहा ! आलिहिदं खु मम मोदअमल्लअं संदावतिमिरेण सुट्ठु ण पेक्खामि भोदु पमज्जिस्सं दाव अहं। ही ही साहु ले चित्तअर ! भाव ! साहु। जुत्तलेहे-दाए वण्णाणं जह जह पमज्जामि, तह तह उज्जलदरं होइ। भोदु, उदएण पमज्जिस्सं। कहिं णु हु उदअं ? इवं सोहणं सुद्धतडाअ। अहं विअ सिवो वि दावएदस्सि मोदअमल्लए णिरासो होदु । [ भोः ! देवकुलपीठिकायां मम मोदकमल्लकं निक्षिप्य दक्षिणामाषकान् गणयित्वा बद्ध्वा प्रतिनिवृत्त

---

भोः इति सम्बोधनम्। देवकुलस्य पीठिकायाम् इति देवकुलपीठिकायाम् = शिवालयालिन्दे, मम = विदूषकस्य, मोदकैः युक्तं मल्लकम् इति मोदकमल्लकं=मिष्ठान्नसमन्वितपात्रं, ( 'मल्लः पात्रे कपोले च मत्स्य भेदे बलीयसि' इति मेदिनी ) निक्षिप्य=संस्थाप्य, दक्षिणामाषकान् = दक्षिणात्वेनाधिगतान् स्वर्णलवान् , गणयित्वा=परिगणय्य, बद्ध्वा=वसने ग्रथित्वा, प्रतिनिवृत्तः = प्रत्यागतः, इदानीं = साम्प्रतं, मोदकमल्लकं = मिष्ठान्नान्वितपात्रं, न=नहि, प्रेक्षे=पश्यामीति प्रथमोऽर्थः ।

देवस्य=कुलपीठिकायाम् इति देवकुलपीठिकायाम् = महासेनवंशमालिकायाम् , कीर्तिप्रतिष्ठाधिष्ठानभूतायां वासवदत्तायामित्याशयः, मम = विदूषकस्य, मोदकमल्लकं = प्रियश्रेष्ठम् , वत्सराजमुदयनमित्याशयः, निक्षिप्य = समर्प्य, उदयनानुरागवती सा वासवदत्ता नूनं तं चिन्तयिष्यतीति विस्रम्भादिति भावः, दक्षिणामाषकान् = वत्सराजदत्तानि प्रतिसन्देशवाक्यानि, गणयित्वा=अवगत्य, बद्ध्वा = चेतसि स्थिरीकृत्य, प्रतिनिवृत्तः = प्रत्यागतोऽहम् , इदानीं = अधुना, मोदकस्य मल्लकम् इति मोदकमल्लकं =

---

कर लिया हो। अथवा ब्रह्मचारी गणेश ने तो यह अविनय ( मोदक की चोरी ) नहीं किया ? अच्छा, तबतक मैं देखता हूँ। अरे ! मेरा यह मोदक तो भगवान शिव के चरण के सन्निकट है। अब मैं इसे ग्रहण करता हूँ। स्वामिन् ! मेरा मोदक दो। स्वामी ! तुम भी चोर हो। कष्ट है, चित्र में लिखित अपने मोदक को आतप की चकाचौंध के कारण आँखों से अच्छी प्रकार नहीं देख पा रहा हूँ। अब मैं इसका अन्वेषण करूँगा। धन्य रे चित्र-

इदानीं मोदकमल्लकं न प्रेक्षे। आ! एकमोदकपरितोषितो न तावद-
वलग्नो मामनुसरति। उच्चतया प्राकारस्यागतिः कुक्कुराणाम्। अक्षतपक्ष

---

वासवदत्तापहरणरूपप्रियकार्यसम्पादकपात्रं, यौगन्धरायणमित्याशयः, न
नहि, प्रेक्षे = अवलोकयामीति द्वितीयोऽर्थः।

आ! = इत्याश्चर्ये, एकेन मोदकेन परितोषितः इति एकमोदकपरितो-
षितः = एकापूपसंतोषितः, अवलग्नः=अलसक्तः, मोदकभोजनसंलग्नो भिक्षु
इत्याशयः, तावत् = तावत्कालपर्यन्तं, न = नहि, माम् = विदूषकम्, अनु-
सरति = अनुयाति। एकमोदकभक्षणसंतुष्टो भिक्षुकः मया सह नागतः।
अतोऽवलग्नः स मोदकमल्लकमपहृतवान् इत्यपि नाशङ्कनीयमिति प्रथमोऽर्थः।

अवलग्नः=षड्भागसक्तो राजा प्रद्योतः एकेन प्रधानेन मोदकेन वत्स-
राजबन्धनरूपेण परितोषितः प्रहर्षितः सन् माम् उपलक्षणतया यौगन्धराय-
णादीन् अस्मान् गूढम् चरतः नानुसरति गर्वान्धकारितहृदयत्वान्न जाना-
तीत्यभिप्रायः। अतः प्रद्योतो यौगन्धरायणन्नपि वद्धवान् इति न शङ्कनीयम्
इति द्वितीयोऽर्थः।

उच्चतया = उन्नततया, प्राकारस्य = देवालयभित्तेः, कुक्कुराणां =

---

कार! धन्य, रंगों का मिश्रण इतना अच्छा है कि जैसे-जैसे स्वच्छ करता हूँ
वैसे-वैसे अधिक धवलित होता जा रहा है। ठीक है, जल से स्वच्छ करूँगा।
अरे! जल कहाँ है? यह स्वच्छ तालाब है। मेरे समान महादेव जी को भी
इस मोदक के विषय में निराश होना पड़े।

(गूढार्थ—महासेन की कन्या वासवदत्ता वत्सराज को सौंपकर और
उनके सन्देश को समझकर और मन में निश्चयकर लौटने पर मैं यौगन्ध-
रायण को नहीं देख रहा हूं, जो वासवदत्ता का अपहरण कर हम लोगों को
सन्तुष्ट करेगा। राजा प्रद्योत वत्सराज को कैद करने से बड़ा प्रसन्न है। वह
गर्वोन्मत्त होने के कारण गूढ वेषधारी हमलोगों को नहीं जानता, अतः यह
सोचना कि उसने यौगन्धरायण को पकड़ लिया होगा, ठीक नहीं। प्राकार
के समान उच्च, बुद्धि में समुन्नत, यौगन्धरायण तुच्छ बुद्धिवाले कुत्तों के
सदृश प्रद्योत के मन्त्रियों से पकड़ा नहीं जा सकता, क्योंकि उन लोगों की

त्तया लोभनीयं पथिकानाम् । अथवा अप्येनं खादामि ? भवतु, उद्गरिष्यामि

शुनकानाम् , न गतिः अगतिः = अप्रवेशः । शुनकाः मे मोदकं भक्षितवन्त इत्यपि न युक्तमिति प्रथमोऽर्थः ।

प्राकारस्य=प्राकारतुल्यस्य यौगन्धरायणस्य, उच्चतया = प्रज्ञोन्नतत्वेन हेतुना, कुक्कुराणां = नीचबुद्धित्वेन श्वतुल्यानां महासेनसचिवानाम् , अगतिः = गतिरुपायो नास्ति यौगन्धरायणं विग्रहीतुम् । अतो महासेन-सचिवैः स विज्ञाय निगृहीत इति शंकायाः नावकाश इति द्वितीयोऽर्थः ।

अक्षतभक्ततया = अहीनान्नयया, पाथेयसम्पन्नतया हेतुना, पथिका-नाम् = अध्वगानाम् , अलोभनीयं = अभिलषणीयं न भवति । पथिका अपि प्रभूतपाथेयसम्पन्नतया हेतुना, मम मोदकं न ग्रहीष्यन्तीति प्रथमोऽर्थः ।

पथिकानां = नित्यसञ्चारितया पथिकतुल्यानां चाराणाम् , अक्षत-भक्ततया = सर्वविधैश्वर्यसम्पन्नतया, अलोभनीयं—स्वामिनोऽन्तिकात् किम-प्यधिगन्तव्यं नास्ति, एवञ्च सम्पूरिताशेषमनोरथदर्पान्वितेन हेतुना महासेन-चाराणां निजकर्मणि यथावद् व्यापाराभाव इत्याशयः । एतावता यौगन्ध-रायणश्चारैः विज्ञाय गृहीतो भविष्यतीत्याशङ्कायाः अनवकाशः ।

अथवा पथिकानां = अस्मदनुचराणां गूढचारिणां वा, अक्षतभक्ततया = अनपायतया भक्ततया स्वाम्यनुरागेण निमित्तेन, अलोभनीयं = रिपुपक्षा-न्तिकात् स्पृहणीयं किमपि न विद्यते । तेनास्मदीयैः सेवकैः परप्रलोभन-दूषितैः यौगन्धरायणोग्राहित इत्यपि नाशंकनीयमिति द्वितीयोऽर्थः ।

---

उनके पास पहुँचने की गति ही नहीं है । प्रतिदिन चलने-फिरने के कारण पथिकों के सदृश महासेन के चर अथवा दूत वत्सराज के पकड़े जाने पर अपने स्वामी प्रद्योत से धन, सोना इत्यादि उपभोग की सामग्रियाँ प्राप्त कर सन्तुष्ट हो गये हैं । अब उनको किसी वस्तु का लालच नहीं है । एतावता मद में चूर होकर वे अपने कार्य में पूर्णतया सावधान नहीं हैं । इसलिये यह शंका भी नहीं की जा सकती कि यौगन्धरायण को महासेन के चरों ने पकड़ लिया होगा । अथवा हमारे पक्ष के अनुचरों ने प्रद्योत से धन प्राप्त कर यौगन्धरायण को पकड़वा दिया होगा, यह विचार भी मन में नहीं लानी चाहिये । क्योंकि वे पूर्णतया स्वामी भक्त हैं और वे प्रद्योत की दी

तावदहम् । ही ही वृद्ध इव सूकरबस्तिः शुद्धवातमेवोद्गिरामि । अथ लोहितकात्यायन्याः संबन्धिमम सम्बधीति कृत्वा शिवेन प्रतिहस्तीकृतं भवेत्

---

अथवा, अपि=आशङ्कायाम्, एनम् = मोदकम्, खादामि=भक्षितवान् अहमित्ति शेषः । अहमेव मोदकं खादितवान् इति प्रथमोऽर्थः ।

अथवा अहमेव प्रमादान्वितं वचनमभिधाय यौगन्धरायणं ग्राहितवान् इति द्वितीयोऽर्थः ।

भवतु=अस्तु, तावत् = तावत्कालपर्यन्तं, अहं = विदूषकः, उद्गिरिष्यामि=उदराद् बहिः निःसारयिष्यामि इति प्रथमोऽर्थः ।

अस्त्वहं किं किं प्रमादपूर्णं वचनं निजगाद इति विषयमवलम्ब्य विचारयिष्यामीति द्वितीयोऽर्थः ।

ही ही इति हर्षे, वृद्धः = आध्मातः, सूकरस्य वस्तिरिति सूकरबस्तिः वराहमूत्राशयः, इव = यथा, शुद्धवातमेव = निर्मलपवनमेव, उद्गिरामि बहिः निसारयामि, अर्थात् मन्मुखान्मोदकगन्धशून्यो वायुरेव बहिः निस्सरतीति प्रथमोऽर्थः ।

सम्यक्विचारे कृते सतीत्थं प्रतिभाति यदहं प्रमादरहितं शुद्धवाक्यं निगदितवानिति द्वितीयोऽर्थः ।

अथवा=वितर्के, लोहितकात्यायनी = चामुण्डा, तस्याः सम्बन्धि तन्मन्दिरलब्धत्वात् तदीयमित्याशयः, मम सम्बन्धीति कृत्वा = स्वपरिचारदैवतस्वामिकं द्रव्यं स्वीयमिति मत्वा, शिवेन = शङ्करेण, प्रतिहस्तीकृतं भवेत् = निजहस्तगतं कृतं स्यात्, इति प्रथमोऽर्थः ।

---

हुई कोई वस्तु स्वीकार नहीं करेंगे अथवा मैंने ही प्रमादपूर्ण वचनों को कह कर उनके भेद का उद्घाटन करते हुए यौगन्धरायण को पकड़वा दिया है। ठीक है, मैंने क्या-क्या प्रमादयुक्त बातें कहीं, इस पर विचार करूँगा। केवल शुद्ध बातें कहीं हैं, यह स्मरण आता है। अथवा शायद यौगन्धरायण ने उस वासवदत्ता की वस्तु वत्सराज को अपनी समझकर अर्थात् इसे कौशाम्बी ले जाना आसान है, यह जानकर पूर्व विचारित कार्य कौशाम्बी प्रमाण का विशेष ख्याल किया हो। खैर, देखूँगा। शिव जी की अब पूजा

यद्यप्येष ब्रह्मचारी बहुकै रूपैरविनयं करोति। भवतु, प्रेक्षिष्ये तावदहम्। भोः ! एष खलु मम मोदकमल्लकः शिवस्य पादमूले तिष्ठति। यावद् एनं गृह्णामि। देहि भर्तः देहि मे मोदमल्लकम्। भर्तः ! त्वमपि चोरोऽसि।

---

अथवा लोहितकात्यायन्याः सम्बन्धि = वासवदत्तायाः सम्बन्धि वत्सराजरूपं वस्तु मत्सम्बन्धीति कृत्वा मदवश्यमनायासेन कौशाम्बीं नेतुं शक्यमिति मत्वा मोदकं प्रियं कर्तुं संकेतितपूर्वं कौशाम्बीप्रयाणविषयं मन्त्रणाकर्म प्रतिहस्तीकृतं भवेत् = अप्रधानीकृतं भवेदिति द्वितीयोऽर्थः।

यद्यपि = अथवा, एकस्मिन् निर्जने देवालये प्रतिष्ठितो गणेश इत्याशयः, एष ब्रह्मचरतीति ब्रह्मचारी, बहुकैः रूपैः = नैकविधप्रकारैः, अविनयं = दुर्वृत्तम्, मोदकापहाररूपं, करोति = विहितवान्।

भवतु—अस्तु, प्रेक्षिष्ये, तावद् = तावत्कालपर्यन्तम्, अहं=विदूषक इति प्रथमोऽर्थः।

शिवस्य सपर्यां विधास्यामि, अथवा यावत्कालं यौगन्धरायणो नागमिष्यति, तावत्कालं प्रतीक्षां करिष्यामि-इति द्वितीयोऽर्थः।

भोः = इति सम्बोधनम्, एष=इदम्, मोदकमल्लकः = अपूयपात्रम्, शिवस्य = शंकरस्य, पादमूले = चरणे, तिष्ठति = विद्यत इति प्रथमोऽर्थः।

एष मोदकमल्लकः = वासवदत्तासहितवत्सराजहरणरूपं प्रियकार्यं, शिवस्य = यौगन्धरायणस्य, पादमूले = अधीने, तिष्ठति = वर्तत इति द्वितीयोऽर्थः।

यावद् एनं—मोदकमल्लकं, गृह्णामि = स्वाधीनं करोमि—इति प्रथमोऽर्थः।

'वासवदत्तासहितवत्सराजपलायनरूपाभिलाषः पूर्णो भवेदित्येवंरूपेण प्रार्थनां विदधामीति द्वितीयोऽर्थः।

देहि=प्रदेहि, भर्तः=स्वामिन्, देहि = प्रदानं कुरु, मे = मम, मोदक-

---

करूँगा अथवा यौगन्धरायण जब तक न आ जाय तब तक उसकी प्रतीक्षा करूँगा। वासवदत्ता सहित वत्सराज का ले जाना यौगन्धरायण के अधीन है। अतः शंकर जी से 'वासवदत्ता सहित वत्सराज की कामना पूरा हो' यह

अविद्या ! आलिखितं खलु मम मोदकमल्लकं सन्तापतिमिरेण सुष्ठु न प्रेक्षे। भवतु, प्रमार्जिष्यामि तावदहम् । ही ही साधु रे चित्रकर ! भाव ! युक्तलेखतया वर्णानां यथा यथा प्रमार्ज्मि, तथा तथोज्ज्वलतरं भवति।

---

मल्लकम् = अभीप्सितार्थम् । भर्तः = स्वामिन् , त्वमपि = भवान् चोरोऽसि = चौरकर्मव्यापृतोविद्यसे ।

अविद्या !=इति खेदे, आलिखितं = आलेख्य अर्पितम् , न तु सत्य खलु = निश्चयेन, मम = विदूषकस्य, मोदकमल्लकं = अपूपपात्रम् , सं एव तिमिरं, तेन सन्तापतिमिरेण = उग्रतापाभिघातजनितेन चक्षुर्जाड्य सुष्ठु = साधु, न = नहि, प्रेक्षे = पश्यामि । भवतु = अस्तु, तावत् = त त्कालपर्यन्तं, अहं = विदूषकः, प्रमार्जिष्यामि = हस्तेनाभिमृश्य शोध ष्यामि । भित्तीन्, हस्तेन संस्पृश्य द्रक्ष्याम्मि यत् कश्चिदन्यो महासेनगूढच ऽस्माकं वार्तां श्रृणोतीति न वेत्याशयः ।

ही हीति शब्दो हर्षे, साधु = प्रशंसनीयोऽस्ति, रे = इति सम्बोधन चित्रकर = आलेख्यशिल्पिन् ! वर्णानां = शुक्लनीलादीनां वर्णानां, युक्तले तया = पर्याप्तनिवेशितया हेतुना, यथा यथा प्रमार्ज्मि तथा तथा उज्ज्व वर्णं भवतीति प्रथमोऽर्थः ।

हे चित्रकर ! = अद्भुतनीतिप्रयोगकुशलो, यौगन्धरायण ! वर्णानां प्रकाराणां, युक्तलेखतया = यथार्हं प्रणयनतया, त्वदीयकार्यविधानावि शेषः, यथा यथा प्रमार्ज्मि = सारतामसारताञ्च विवेचयामि, तथा तथो ज्ज्वलतरं भवति = तथा तथा सारतरं प्रतीयते—इति द्वितीयोऽर्थः।

भवतु = अस्तु, उदकेन = जलेन, प्रमार्जिष्यामि = शोधयिष्यामि स्पष्टः प्रथमोऽर्थः ।

जले आत्मानं तिरोभूय कश्चिदन्यो गूढचरो मन्वार्तां न समाकर्णयेदि द्वितीयोऽर्थः ।

---

याचना करूँ । अब दीवालों को छू छू कर टटोलकर देखूँगा कि मह का कोई चर दीवाल की ओट में खड़ा होकर हमारी गूढ़वार्ता को सुन नहीं रहा है ? अद्भुतनीति को काम में लाने में प्रवीण हे चित्रकर (यौग

उदकेन प्रमार्जिष्यामि । कुत्र न खलूदकम् ? इदं शोभनं शुद्धतटाकम् । अहमिव शिवोऽपि तावद् एतस्मिन् मोदकमल्लके निराशो भवतु । ]

( नेपथ्ये )

मोदआ ! मोदआ ! हहह । [ मोदकाः ! मोदकाः ! हहह । ]

विदूषकः--अविहा ! एसो उन्मत्तओ मम मोदअमल्लअं गह्णिअ हसमाणो फेणायमाणमलिणवरिसारच्छोदअं विअ इदो एव्वाहावइ चिट्ठ

---

कुत्र न खलूदकम् = जलं क्व विद्यत इत्याशयः । इदं शोभनं=मनोहरं, शुद्धतटाकं = निर्मलजलम् । अथवा अन्यजनसंसर्गरहितं तटाकं यस्मिस्तत् तथाभूतमतएव शोभनम् = मङ्गलकरम् ।

अहम् = विदूषकः, इव = यथा, शिवोऽपि = शंकरोऽपि तावत् = तावत्कालपर्यन्तं, एतस्मिन् मोदकमल्लके = पुरोदृश्यमानेऽसत्ये अपूपपात्रे, निराशो भवतु = विगताभिलाषोऽस्तु—इति स्पष्टः प्रथमोऽर्थः ।

अहमिव शिवोऽपि = यौगन्धरायणोऽपि, एतस्मिन् मोदकमल्लके = वासवदत्तारहितवत्सराजहरणे, निराशो भवतु=परित्यक्तमनोरथो भवतु— इति द्वितीयोऽर्थः ।

---

रायण ) ! तुम्हारी नीतिकुशलता धन्य है । तुम्हारा कोई उपाय सारहीन ( असफल ) नहीं मालूम पड़ता । कहीं कोई पानी में तो छिपकर मेरी यह गुप्त बात नहीं सुन रहा है ? यहाँ इस तालब का जल शुद्ध है और यहीं लोगों की भी भीड़ नहीं होती । यह स्थान शुद्ध जल से पूर्ण तालाब वाला और मङ्गलकारी है । हमारी तरह यौगन्धरायण भी वासवदत्ता के बिना वत्सराज को ले जाने की अभिलाषा न करें किन्तु उसके साथ वत्सराज को ले जाने की इच्छा करें । )

( नेपथ्य में )

मोदक, मोदक, हहह !

विदू०—यह उन्मत्तक मेरा मोदक लेकर हंसता हुआ वर्षाकालीन गली के गन्दे फेनसनन्वित जल के समान उधर ही आ रहा है । उन्मत्तक ! ठहरो, ठहरो । इस काष्ठदण्ड से तुम्हारा शिर फोड़ डालता हूँ ।

चिट्ठ उन्मत्तअ ! चिट्ठ। इमिणा दण्डकट्ठेण सीसं दे भिन्दामि [अवि इष उन्मत्तको मम मोदकमल्लकं गृहीत्वा हसमानः फेनायमानमिलनवर्णार दकमिवेत एवाधावति । तिष्ठ तिष्ठोन्मत्तक । तिष्ठ । अनेन दण्डकाष्ठेन ते भिनद्मि । ]

( ततः प्रविशत्युन्मत्तकः । )

उन्मत्तकः—मोदआ ! मोदआ ! कहह । [ मोदकाः ! मोदकाः, हह

विदूषकः—भो उन्मत्तअ ! आणेहि मम मोदअमल्लअं ? [ उन्मत्तक ! आनय मम मोदकमल्लकम् ।

उन्मत्तकः—किं मोदआ । कहिं मोदआ । कश्श मोदआ । कि

---

अविधा = इति तु खेदसंसूचकमव्ययपदम् । एष = पुरोदृश्यमा उन्मत्तकः = एतन्नामा, मम = विदूषकस्य, मोदकमल्लकं = अपूपपात्र गृहीत्वा = आदाय, हसमानः = हासं विदधन्, फेनायमानमलिनव श्योदकम् = फेनमुद्गिरन्नस्वच्छवर्षाप्रतोलीजलम्, इव यथा, इत एव अत्रैव, आधावति = क्षिप्रमागच्छति, तिष्ठ तिष्ठ = स्थिरोभव, स्थिरो उन्मत्तक ! = इति सम्बोधनम्, अनेन = एतेन, दण्डकाष्ठेन = द शीर्षं = मस्तकं, ते = तव, भिनद्मि=संस्फोटयामि—इति प्रथमोऽर्थः।

गृहीत्वा = अपहृत्य, उन्मत्तकः = उन्मत्तसदृशो यौगन्धरायणः, मोद मल्लकं = मम प्रियतरं मन्त्रावसरम्, इत एवाधावति=अत्रैवागच्छति इति द्वितीयोऽर्थः । अन्यत्सर्वं सुकरम् ।

भो उन्मत्तक ! इति सम्बोधनम् ( हे यौगन्धरायण ! ) आनय देहि, मम=मे, मोदकमल्लकम् = मन्त्रावसरम् ।

---

( इसके अनन्तर उन्मत्तक [ यौगन्धरायण] का प्रवेश । )

उन्म०—मोदक, मोदक, हहह !

विदू०—ऐ उन्मत्तक ! मेरा मोदक लाओ ।

उन्म०—कैसे मोदक, कहाँ के मोदक ! किसके मोदक ! क्या ये मोद फेंके जायेंगे अथवा बाँधे जायेंगे या खाये जायेंगे ?

मोदआ उज्झन्ति, आदु पिणज्झन्ति, उदाहो खज्जन्ति [। किं मोदकाः ? कुत्र मोदकाः ? कस्य मोदकाः ? किमिमे मोदका उज्झ्यन्ते, अथवा पिनह्यन्ते उताहो खाद्यन्ते ?

विदूषकः—ण खज्जन्ति ण खज्जन्ति ण उज्झन्ति अ। [ न खाद्यन्ते न खाद्यन्ते नोज्झ्यन्ते च। ]

---

मोदकाः = मन्त्राः, अज्ञाताः किं, किं शब्दः अज्ञातार्थे, कुत्र मोदकाः = किं निजपक्षोत्थदोषप्रतीकारविषये अथवा परपक्षोत्थदोषप्रतीकारविषये मन्त्राः कर्तव्याः, कस्य मोदकाः = अस्मत्स्वामी ! (मोदकाः बहुमाने बहुत्वम् ) मोदकाः कस्य = किं सम्बन्धी, किमस्माकं वश्यः उत परवश्यः, परवश्यत्वपक्षे आह—मोदकाः = स्वामिप्रत्यानयनार्थे धार्यमाणाः वेषाः, किम् उज्झ्यन्ते = फलनैराश्यात् किं त्यज्यन्ताम्, अथवा किं पिनह्यन्ते = यावत् फलोदयं किं वध्यन्ताम्, फलप्रत्याशाबीजं किञ्चिदस्ति किमत्यभिप्रायः, उताहो किं खाद्यन्ते = किं खाद्यन्ताम् अर्थात् हन्यन्ताम्, स्वामिमोचनवामचेष्टिताः शत्रवः।

बाह्योऽर्थः स्फुटः। आभ्यन्तरोऽर्थस्तु—मम = उन्मत्तकस्य यौगन्धरायणस्य, रसना = बुद्धिः, खादितुकामा = रिपून् हन्तुकामा लिङ्गानि करोति = जिघांसुचिह्नानि विदधाति।

---

( गूढार्थ—क्या ये मन्त्र विचार या सलाह किसी को मालूम नहीं है ! अर्थात् इस विषय पर तो पहले ही से विचार हो चुका है, अब उसकी क्या चर्चा ? यह मन्त्र ( सलाह ) अपने तरफ के दोषों को हटाने हेतु या शत्रुपक्ष के दोषों को निवारण निमित्त किया जा रहा है ? हमलोगों के स्वामी क्या हमारे वश में हैं अथवा शत्रुओं के ? यदि स्वामी शत्रुओं के वश में हैं और उनके छुड़ाने की कोई आशा न हो तो स्वामी को ले जाने के लिये धारण किया हुआ यह वेष हम छोड़ दें, यदि आशा हो तो धारण किये रहें या कहिये तो शत्रुओं को जो स्वामी को छुड़ाने के प्रतिरोधक हैं, मार डाला जाय। )

विदू०—ये न तो खाये जायँगे और न तो छोड़े जायँगे।

उन्मत्तकः—एसा खु मम रसणा खाइदुकामा लिङ्गाणि करेदि। [ एषा खलु मम रसना खादितुकामा लिङ्गानि करोति।

विदूषकः—भो उन्मत्तअ। आणेहि मम मोदअमल्लअं। मा परकेरए सिणेहं करिअ ओवज्झेहि। [ भो उन्मत्तक ! आनय मम मोदकमल्लकम्। मा परकीये स्नेहं कृत्वा अवबध्यस्व ! ]

उन्मत्तकः—के के मं वज्झन्ति ? मोदआ खु मं रक्खन्ति।
[ के के मां बध्नन्ति ? मोदकाः खलु मां रक्षन्ति। ]

णेवच्छविसेसमण्डिदा पीदि उवदेदुं उवट्ठिआ।
लाअगिहे दिण्णमुल्लिआ कालवसेण मुहुत्तदूब्बला॥ १॥

---

भो उन्मत्तक ! इति सम्बोधनम्, आनय = देहि, मम = मे, मोदकमल्लकत् = मन्त्रावसरम्, वृत्तान्ततत्त्वं ते निवेदयामि—मा परकीये स्नेहं कृत्वा अवबध्यस्व = वत्सराजे पराधीने सति यथानिश्चिततत्कौशाम्बीप्रयाणाय निवेशं कृत्वा शत्रुबद्धो मा भव—इत्याभ्यन्तरोऽर्थः।

के के मां वध्यन्ति ? मोदकाः खलु मां रक्षन्ति = मोदकाः = स्थानास्थाने स्थापिताः वत्सराजभटाः, मां = यौगन्धरायणं, रक्षन्ति = रक्षिष्यन्ति मद्बन्धनोद्यतेभ्यः शत्रुभ्यः इति शेषः।

---

उन्म०—मेरी जिह्वा तो खाने की इच्छा से भूखे का-सा-चिह्न प्रदर्शित कर रही है। ( गूढार्थ—मेरी इच्छा तो शत्रुओं को मारने की होती है। )

विदू०—ऐ उन्मत्तक ! मेरे लड्डू को जाओ। पराये ( दूसरे ) की वस्तु में प्रेम करके मत फँसो। ( गूढार्थ—हे उन्मत्तक ! सलाह करने का अवसर दो, मैं तुमसे कुछ कहूँगा। वत्सराज इस समय पराधीन हैं, अतः उनको कौशाम्बी ले जाने का विचार कर स्वयं न फँसो। )

उन्म०—कौन, कौन मुझे बाँध सकती है ? मोदक मेरी रक्षा करेंगे। ( गूढार्थ—मेरे बन्धन के लिये समुद्यत शत्रुओं से स्थान, स्थान पर नियुक्त गुप्तरूपधारी वत्सराज के वीर मुझे बचायेंगे। )

विशेष सामग्रियों से निर्मित और राजगृह में खरीदे हुए तथा समय पाकर सूखे हुए ये मोदक मेरी तृप्ति के लिये प्राप्त हुए हैं॥ १॥

[ नेपथ्यविशेषमण्डिताः प्रीतिमुपदातुमुपस्थिताः ।
राजगृहे दत्तमूल्याः कालवशेन मुहूर्तदुर्बला ॥ ]

विदूषकः—भो उन्मत्तअ ! आणंहि मम मोदअमल्लअं । इमिणा पच्चएण उवज्झाअउलं गन्तव्वं । [ भो उन्मत्तक ! आनय मम मोदकमल्लकम् । अनेन प्रत्ययेनोपाध्यायकुलं गन्तव्यम् । ]

---

अन्वयः—नेपथ्यविशेषमण्डिताः राजगृहे दत्तमूल्याः कालवशेन मुहूर्तदुर्बलाः प्रीतिम् उपदातुम् उपस्थिताः ।

व्याख्या—नेपथ्यविशेषैः = अलङ्कारभेदैः, गुल्मचणकनालिकेरादिभिरुपस्कारभेदैः, मण्डिताः = अलङ्कृताः, पूरितोदराः, राजगृहे = नरपतिसदने, दत्तं मूल्यं येषां ते दत्तमूल्याः = मूल्यं प्रदायगृहीताः, न तु चोरिताः, कालवशेन = समयवशेन, मुहूर्त्तदुर्बलाः = क्षणेन प्रभावरहिताः, (मोदकाः मम ) प्रीतिं = तृप्तिम् , उपदातुं = जनयितुम् , उपस्थिताः = मत्करे समागताः—इति प्रथमोऽर्थः ।

नेपथ्यविशेषमण्डिताः = भिन्नवेषालङ्कृताः, राजगृहे = वत्सराजभवने, दत्तमूल्याः = मया स्वामिना च दत्तभोग्याः, कालवशेन = समयपराधीनेन, मुहूर्तदुर्बलाः = कियन्तंचित् कालप्रकाशमानशौर्य्याः, (मोदकाः=राजसेवकाः) प्रीतिम् = तोषम् , उपदातुं = उत्पादयितुं, अथवा वत्सराजापहरणे साहाय्यं कर्तुम् , उपस्थिताः = उज्जयिन्यामेव समीपे गूढस्थिताः । ते राजसेवकाः मम स्वामिनश्च रक्षा नूनं विधास्यन्तीति भाव इति द्वितीयोऽर्थः ॥ १ ॥

भो उन्मत्तक ! इति सम्बोधनम् , मम = विदूषकस्य, मोदकमल्लकम्= अपूपपात्रम् , आनय = देहि, अनेन मोदकेन प्रत्ययेन हेतुना, उपाध्यायकुलं= आचार्यकुलं, गन्तव्यम् = गमिष्यामीति प्रथमोऽर्थः ।

---

विदू०—ऐ उन्मत्तक ! मेरे मोदक को लाओ । इसी को खाकर मैं आचर्य के घर जाऊँगा । ( गूढार्थ—ऐ उन्मत्तक ! मुझे सलाह करने का मौका दो । आपसे सलाह करके और कार्य का निश्चय करके उसको बताने के लिये स्वामी के पास जाऊँगा । )

उन्मत्तकः—मए वि इमिणा पच्चएण जोअणसदं गन्तव्वं। [मया-प्यनेन प्रयत्नेन योजनशतं गन्तव्यम् । ]

विदूषकः—किं एलावणे तुवं ? [ किमैरावतस्त्वम् ]

उन्मत्तकः—आम एलावणे अहं। ण हु दाव देवतामो मं मारुअं आलुहदि शुदं च मया पादपाशिएहि इन्दे वज्झ त्ति। धाराणि मेहेहि विज्जुम्मईहि कशाहि तालिअ वाउब्भामेण परिब्भमन्तेण भिन्दोअदि

---

भो उन्मत्तक !—हे यौगन्धरायण! मम मोदकं = मन्त्रावसरं, आत्मदः देहि, अनेनप्रत्ययेन = भवता साकं मन्त्रयित्वा कर्तव्यपथं निश्चित्य च, उपाध्यायकुलं=स्वामिवासस्थानम्, गन्तव्यम्, स्वामिने मन्त्रार्थी, निवेदयितुं तस्मान्मन्त्राय त्वरस्वेत्यभिप्रायः। इति द्वितीयोऽर्थः।

बाह्यार्थः स्फुटः। मयापि=यौगन्धरायणेनापि, अनेन प्रत्ययेन=मदुल्लिखितपूर्वेण रन्ध्रेण उपायेन स्वामिनं समादाय, योजनशतं = योजनशतविप्रकृष्टं कौशाम्बीनगरं, गन्तव्यमिति द्वितीयोऽर्थः।

किम्=इति प्रश्ने, त्वम्=भवान्, ऐरावणः=ऐरावतः, अस्तीति शेषः।

---

उन्म०—मैं भी तो इसी पाथेय की सहायता से सौ योजन जाऊंगा। ( गूढार्थ—स्वामी सहित मैं भी पूर्व विचारित उपाय ( राजा के हाथी नलगिरि को किसी प्रकार उन्मत्त कर दिया जाय, उसको वश में करने के लिये वत्सराज को जो गजवशीकरण विद्या को जानते हैं, राजा कारागार से मुक्त कर देगा। उस समय वत्सराज हाथी पर सवार हो जायेंगे और हम उनके साथ भाग चलेगें। ) से सौ योजन स्थित कौशाम्बी जा सकता हूँ। )

विदू०—क्या तुम ऐरावत हो ! ( गूढार्थ—क्या पूर्वोक्त सलाह के अनुसार काम करने में तुम्हारी दिव्य शक्ति है ? )

उन्म०—हाँ, मैं ऐरावत हूँ, किन्तु देवराज इन्द्र मुझ पर सवारी नहीं करते। मैंने सुना है कि इन्द्र को पादपाशिकों ( शालङ्कायन आदि तुच्छ लोगों ) से बाँध लिया गया था। वृष्टि को रोकने वाली बिजली के कोड़ों से मारकर चारों तरफ बहता हुआ प्रचण्ड पवन मेघबन्धन को भेदन कर रहा है। ( गूढार्थ—मेरे स्वामी वत्सराज मुझ किङ्कर को काम में नहीं

मेहबन्धणं । [ आम ऐरावतोऽहम् । न खलु तावद् देवराजो मामासनमारोहति । श्रुतं च मया पादपाशिकैरिन्द्रो बद्ध इति । धारानिगलैः विद्युन्मयीभिः कशाभिस्ताडयित्वा वातोद्भ्रामेण भिद्यते मेघबन्धनम् ।]

विदूषकः—भो उम्मत्तअ ! ण तुवं मम दइस्सिसि, विलविस्सं दाव

---

माम् = बाढम्, अहम् = उन्मत्तकः, यौगन्धरायणो वा, ऐरावणः = शक्रहस्तिनो नाम ।

न खलु तावद् देवराजो मामासनमारोहति = इन्द्रो मदुपरि नारोहतीति प्रथमोऽर्थः ।

देवानां राजा देवराजः = वत्सराज राजश्रेष्ठः, मां कस्मिन्नपि कार्ये न नियुङ्क्ते, यदि नियुङ्क्ते तर्हि तत्कर्म ततोऽधिकमपि कर्तुमहं समर्थं इति द्वितीयोऽर्थः ।

श्रुतं = समाकर्णितं, मया = उन्मत्तकेन, पादपाथिकैः = चरणबन्धुरज्जुभिः, क्षुद्रायुधयोधिभिर्वा, (पादपाशः चरणबन्धनरज्जुः प्रहरणम् एषामिति तैः पादपाशिकैः । ) इन्द्रः = ऐरावतस्वामी, अथवा पादपाशिकैः = क्षुद्रशालङ्कायनादिभिः, इन्द्रः = मत्स्वामी, वत्सराजः बद्धः = निबद्धः इति ।

धारायाः वृष्टिजलप्रपातस्य, निगलैः = प्रतिबन्धकैः इति धारानिगलैः = वृष्टिप्रपातप्रतिबन्धकैः, विद्युन्मयीभिः = तडिद्रचितैः, कशाभिः = प्रतोदैः, मेघबन्धनं = वारिदबन्धनं, भिद्यते = तांड्यते—इति प्रथमोऽर्थः ।

धारानिगलैः = रिपुसैन्यप्रतिरोधिकाभिः, विद्युन्मयीभिः कशाभिः ताडयित्वा = विद्युद्भिः इव अतर्कितमाविर्भवन्तीभिः कशातुल्यैरस्माकं गूढभटैः रिपून् ताडयित्वा, मेघबन्धनं भिद्यते = अन्तरिक्षावरोधनं भेत्स्यते—इति द्वितीयोऽर्थः ।

---

लगाते । सुना है कि इन्द्र मामूली वीरों से बांध लिया गया था, इससे वह मुझ उन्मत्त वेषधारी पर सवारी नहीं करता । शत्रु सेना को रोकनेवाले हमारे भटों से जो बिजली के समान अचानक प्रकट हो जायेंगे, शत्रुओं का संहार कर स्वामी का बन्धन अवश्य काट डाला जायगा । )

विदू०—ऐ उन्मत्तक ! यदि तुम न बोलो, तो मैं रुदन करूंगा ।

अहं । [ भो उन्मत्तक ! न त्वं मम दास्यसि, विलपिष्यामि तावदहम् । ]

उन्मत्तकः—विलव विलव विक्कोस वा विलव । [ विलप विलप विक्रोश वा विलप । ]

विदूषकः—अव्वम्मण्णं भो ! अव्वम्मण्णं । [ अब्रह्मण्यं भोः ! अब्रह्मण्यम् । ]

उन्मत्तकः—अहं पि विलविस्सं । इन्दे वज्झे भो ! इन्दे वज्झे भो ! [ अहमपि विलपिष्यामि । इन्द्रो बद्धो भोः ! इन्द्रो बद्धो भोः । ]

विदूषकः—अव्वम्मण्णं । भो ! अव्वम्मण्णं । [ अब्रह्मण्यं भोः ! अब्रह्मण्यम् । ]

( नेपथ्ये )

मा भाआहि मा भाआहि बह्मणाउस ! मा भाआहि । [ मा विभीहि ब्राह्मणोपासक ? मा बिभीहि । ]

---

भो उन्मत्तक ! = हे यौगन्धरायण, न त्वं मम दास्यसि, विलपिष्यामि तावदहम्=मया साकं परामर्शं न विधास्यसि, अथवा रुमण्वतोऽपि प्रतीक्षां करिष्यसि, चेत् तमाकारयिष्यामि ।

मा बिभीहि मा बिभीहि ब्राह्मणोपासक ! मा बिभीहि=भयं मा कुरु, भयं मा कुरु । अहं त्वया साकं मन्त्रणार्थं समागतोऽस्मि ।

---

( गूढार्थ—यदि तुम अकेले मुझसे सलाह न करोगे और रुमण्वान की भी प्रतीक्षा करोगे तो मैं उसे पुकारूँगा । )

उन्म०—हे विक्रोशक ! रोने वाले ! रुदन करो ! रुदन करो ! चिल्लाओ ।

विदू०—अधर्म, अधर्म ।

उन्म०—मैं भी विलाप करूँगा—इन्द्र बांधा गया, इन्द्र बाँधा गया ।

विदू०—अधर्म ! अधर्म ।

( नेपथ्य में )

ऐ ब्राह्मण भक्त ! मत डरो, मत डरो । अर्थात् मैं तुम्हारी रक्षा के लिये आ गया हूँ । ( गूढार्थ—मैं तुमसे सलाह करने आया हूँ । )

विदूषकः—( सहर्षम् ) आअदे चन्दे समाअदाणि सव्वणक्खत्ताणि । अघं ब्रह्मणभावं । ईसामतएण समणएण अभअं दीअदि । [ आगते चन्द्रे समागतानि सर्वनक्षत्राणि । अघं ब्राह्मणभावः । ईहामात्रकेण श्रमणकेनाभयं दीयते । ]

( ततः प्रविशति श्रमणकः )

श्रमणकः—मा भाआहि मा भाआहि ब्रह्मणाउस ! मा भाआहि । के के इह, किं कय्यं विलवन्दि । [ मा विभीहि मा विभीहि ब्राह्मणोपासक । मा विभीहि । के के इह, किं कार्यं, विलपन्ति । ]

---

चन्द्रे=दयालौ श्रमणके आगते=समागते सति, सर्वनक्षत्राणि = तत्समान्ये सत्पुरुषाः समागतवन्त इति प्रथमोऽर्थः ।

चन्द्रे=यौगन्धरायणे, आगते = समागते सति तत्सहचरावावामपि समागतौ—इति द्वितीयोऽर्थः ।

ब्राह्मणभावः = ब्राह्मणत्वम् , अघः = पापम् । चन्द्रे = यौगन्धरायणे, आगते = प्राप्ते, सर्वनक्षत्राणि=सर्वेः राजसेवकाः, आगताः—इत्याशयः ।

ईहाकर्ममात्रापरिच्छेदो यस्य तेन ईहामात्रकेण = सत्कर्मप्रधानेन अथवा मामकाभयेच्छाप्रकाशनमात्रेणेति भावः ।

मा बिभीहि मा बिभीहि=भयं मा कुरु, भयं मा कुरु । ब्राह्मणानाम् उपासकः ब्राह्मणोपासकः, तत्सम्बुद्धौ ब्राह्मणोपासक !=हे द्विजपूजक !

---

विदू०—( आनन्द के साथ ) चन्द्रमा के आ जाने पर सब नक्षत्र आ गये । ब्रह्मणत्व पाप ( दुःखदायक ) है । इच्छा प्रकट करते ही श्रमणक मुझे अभय देने को उपस्थित हो गया । ( गूढार्थ—यौगन्धरायण के आ जाने पर उनके समान और सज्जन भी आ गये । रुमण्वान् पुकारने मात्र से सलाह के वास्ते आ गया । )

( इसके अनन्तर श्रमणक प्रवेश करता है । )

श्रम०—भय न करो, भय न करो ! ऐ ब्राह्मण भक्त ! मत डरो । कौन-कौन और किसलिये यहाँ विलाप कर रहे हैं ?

विदूषक:—अविहा पडिहाररक्खअउत्ति खु समणओ अणुहोदि। भो समअण ! भअवं ! एसो उन्मत्तओ मम मोदअमल्लअं गहणिअ ण देदि। [ अविघा प्रतिहाररक्षकवृत्ति खलु श्रमणकोऽनुभवति। भो: श्रमणक ! भगवन् ! एष उन्मत्तको मम मोदकमल्लकं गृहीत्वा न ददाति। ]

श्रमणक:—मोदअं पेक्खामि दाव। [ मोदकं प्रेक्षे तावत्। ]

उन्मतक:-पेक्खदु पेक्खदु शमणअ ! भवं [ प्रेक्षतां प्रेक्षतां श्रमणक ! भवान्। ]

श्रमणक:—थु थु [ थु थु। ]

विदूषक:—हद्धि उन्मत्तअस्स इत्थे ईहामत्तएण समणएण थुथूकिदा अधण्णस्स मम मोदआ विट्ठपुरुवा एव्व संवृत्ता। [ हा धिग् उन्मत्तकस्य हस्ते इहा मात्रकेण श्रमणकेन थुथूकृता अधन्यस्य मम मोदका दृष्टपूर्वं एवं संवृत्ता:। ]

---

अविधा इत्यव्ययपदम्। प्रतिहाररक्षकस्य वृत्तिम् प्रतिहाररक्षकवृत्तिम्=द्वारपालजीविकाम्, अनुभवति=अनुसरति। मोदकमल्लकम्=मन्त्रणाकालम्।

अधन्यस्य = भागधेयरहितस्य, श्रमणकेन=शाक्यभिक्षुणा, थुथूकृता:=थुथूकरणेनाशुद्धीकृता:, दृष्टपूर्वा: ऐव सञ्जाता:=पूर्वं दृष्टा: केवलं जाता:, न तु मम इदानीं खादनयोग्या:, हा धिग्=कष्टम् विद्यत इति शेष:।

न विद्यते धन्यो यस्मात् स अधन्य: तस्य अधन्यस्य=अतिभागधेयान्वि-

---

विदू०—श्रमणक तो चौकीदार का कार्य कर रहा है। हे श्रमणक ! हे भगवन् ! यह उन्मत्तक मेरे श्रेष्ठ मोदक को लेकर अब प्रदान नहीं कर रहा है। ( गूढार्थ—मुझे सलाह करने का अवसर नहीं देता है। )

श्रम०—मैं भी मोदक को तो देखूँ ? ( गूढार्थ—मैं भी सलाह चाहता हूँ। )

उन्म०—हे श्रमणक ! आप देखिये, देखिये।

श्रम०—थु थू।

विदू०—हाय, बड़े कष्ट की बात है कि मुझ भाग्यहीन के मोदक, जो

श्रमणकः—भो उन्मत्तआउस ! णीआदेहि णीहादेहि एदाणि मोदआणि कत्थुलिआफेणपण्डराणि बहुपिट्ठसमिद्धकोमलाणि णट्ठाणिका सुरा विअ महुराणि। मा दे खाईदाणि खअं उत्पादन्तु। [ भो उन्मत्तकोपासक ! निर्यातय निर्यातय एतानि मोदकानि कस्थूलिकाफेनपाण्डराणि बहुपिष्टसमृद्धकोमलानि निष्ठानिताः सुरा इव मधुराणि। मा ते खादितानि क्षयमुत्पादयन्तु । ]

---

तस्य, दृष्टपूर्वाः = ज्ञातपूर्वाः, मोदकाः=स्वामिसन्देशाः, श्रमणकेन=समण्वता, थूथूकृताः = अनुमोदिताः इति गूढार्थः ।

उन्मत्तकस्य उपासक इति उन्मत्तोपासक = उन्मत्तकभक्त ! कस्य जलस्य स्थूलिका परिबृंहणम्, कस्थूलिका इव फेनानि इव च पाण्डराणि धवलानि कस्थूलिकाफेनपाण्डराणि, बहुभिः पिष्टैः मृदिततण्डुलचूर्णैः समृद्धानि कोमलानि च, निष्ठानिताः=तेमनयुक्ताः, ( 'स्यात् तेमनं तु निष्ठानम्' इत्यमरः ) सुरा=मदिरा ।

हे उन्मत्तोपासक !=हे यौगन्धरायण ! विदूषककथनेन मन्त्रणासमयं देहि । मोदकानि = उपायाः, पाण्डराः = अनिष्टशङ्कारहिताः, बहुपिष्ट-

---

उन्मत्तक के हाथ में रक्खे हुए थे, श्रमणक ने थू थू करके अशुद्ध कर दिया। अतः अब वे देखे हुए के समान हो गये, खाने लायक नहीं रहे। ( गूढार्थ— मुझ भाग्यवाले का पूर्व विज्ञात स्वामी के सन्देश को श्रमणक के वेष में समण्वान् ने भी अनुमोदित कर दिया। )

श्रम०—हे उन्मत्तक के भक्त ! निकालो, निकालो ( फेंक दो )। ये लड्डू बर्फ के समान सफेद, फेन की तरह धवल और अनेक पिसी हुई तण्डुलचूर्ण आदि वस्तुओं से बने हैं, शिखरनयुक्त शराब के समान मीठे हैं। खाने पर कहीं ये तुम्हें क्षयरोग न उत्पन्न कर दें। ( गूढार्थ—हे यौगन्धरायण ! विदूषक के कहने से सलाह का मौका दो। ये उपाय अनिष्ट की शङ्का से रहित, विविध लोगों से विचार किये हुए प्रचुर फलप्रद, अनायास साध्य और रमणीय हैं। यदि तुम केवल अपनी बुद्धि के अनुसार ही कार्य करोगे तो तुम्हारा अनिष्ट होगा। अतः विदूषक की भी बात सुनो।)

विदूषकः—अविहा मोदआणि त्ति करिअ कण्डिललड्डुआ मे पडिच्छिदा। [ अविधा मोदका इति कृत्वा कण्डिललड्डुका मे प्रतीष्टाः। ]

श्रमणकः—उन्मत्तआउस ! णीआदेहि। जदि ण णीआदेसि, एदं सवेमि। [ उन्मत्तकोपासके ! निर्यातय निर्यातय। यदि न निर्यातयसि, त्वां शपामि। ]

उन्मत्तकः—पशीददु पशीददु शमणअ ! भअवं। मा खु मा खु मं शविदं। गह्ण गह्ण। [ प्रसीदतु प्रसीदतु श्रमणक ! भगवान् ! मा खलु मा खलु मा शप्तुम्। गृहाण गृहाण।]

---

समृद्धकोमलाः = अनेकशः विमृष्टा अतएव समृद्धाः = पर्याप्तदोहनार्हाः कोमलाः = अक्लेशसाध्याः, मोदकानि=उपायाः, मधुराः = रमणीयाः, ते = त्वया, एकाकिनेत्याशयः, खादितानि-निर्णीतानि, क्षयं = निष्फलतां, मा उत्पादयन्तु—न कुर्युः, एतावता विदूषकवचनमपि श्रोतव्यमिति गूढार्थः।

अविधा—कष्टवाचकमव्ययपदम्, मोदका इति कृत्वा = मोदकानि इति कृत्वा, कण्डिलः सुराकारः तत्सम्बन्धिनो लड्डुकाः इति कण्डिलल-ड्डुकाः-सुराकारमोदकाः, मे प्रतिष्ठाः=मया प्रतीक्षिताः।

प्रसीदतु=प्रसन्नो भवतु। गृहाण गृहाण=मन्त्रणामारभदवेति भावः।

---

विदू०—हाय, कष्ट है। मैंने मोदक खाने की अभिलाषा से शराब बनाने वाले के लड्डुओं की प्रतीक्षा की। अतः ये मोदक ब्राह्मण के खाने योग्य नहीं हैं। ( गूढार्थ—मैं मन्त्री का यह संदेश कहने गया था कि कौशम्बी को शीघ्र प्रस्थान करना चाहिए, किन्तु स्वामी ने मुझसे कहा कि समय को देखते हुए वासवदत्ता को लेकर चलूँगा। मैंने स्वामी का यह आदेश स्वीकार कर लिया। यही एक कठिन बात पैदा हो गई। )

श्रम०—हे उन्मत्तोपासक ! दे दो, दे दो, यदि प्रदान न करोगे तो तुम्हें शाप प्रदान करूँगा। ( गूढार्थ—यदि मन्त्रावसर न दोगे तो तुम्हारी बुराई होगी। )

उन्म०—प्रसन्न हो, प्रसन्न हो। भगवन् ! आप मुझे शाप मत प्रदान करें। लीजिये, लीजिये। ( गूढार्थ—मन्त्रणा प्रारम्भ करो। )

श्रमणकः—ब्रह्मणाउस ! पेक्ख पेक्ख मम प्पभावं। [ हे ब्राह्मणोपासक ! प्रेक्षस्व प्रेक्षस्व मम प्रभावम् ]

विदूषकः—एसो उन्मत्तओ एवेण ईहामत्तएणसमगएण उज्झिदं सावं पेक्खिअ मोदअमल्लअं भीदभीदं अग्गङ्गुलिआए पसारिदाये ठाविअ चिट्ठई। भो उन्मत्तअ ! आणेहि मम मोदअमल्लअं। [ एष उन्मत्तक एतेनेहामात्रकेण श्रमणकेन उज्झितं शापं प्रेक्ष्य मोदकमल्लकं भीतभीतमग्राङ्गुल्यां प्रसारितायां स्थापयित्वा तिष्ठति। भो उन्मत्तक ! आनय मम मोदकमल्लकम्। ]

श्रमणकः—एदु एदु भवं। एदेहि मोदएहि मं सोत्थि वाअइस्ससि। [ एतु एतु भवान्। एतैर्मोदकैर्मां स्वस्ति वाचयिष्यसि। ]

विदूषकः—ही ही ममकेरएहि सोत्थि वा एनि। भए वि कोडुम्बिअस्स हत्थादो पडिग्गहगहीदाणि। ताणि भवदो वि उवाअणं भविस्सदि।

---

प्रभावम्=निग्रहानुशक्तिमित्याशयः।

एष = अयं, उन्मत्तकः = यौगन्धरायण, ईहामात्रकेण=चेष्टामात्रकेण, उज्झितं=दत्तम्। एष यौगन्धरायणः रुमण्वद्वाक्यबहुमानान्मह्यं मन्त्रावसरं दातुं दानोन्मुखकराङ्गुल्यग्रगतमिव सज्जं कृत्वा तिष्ठतीति गूढार्थः।

एतु एतु=अत्रागच्छतु, अत्रागच्छतु। एतैः मोदकैः करणैः अथवोपायैः स्वामिसंदेशैर्वा मां स्वस्तिवाचयप्रीणयेति गूढाशयः।

---

श्रम०—हे ब्राह्मण भक्त ! मेरे प्रभाव का अवलोकन करो।

विदू०—यह उन्मत्तक तो श्रमणक की शाप देने की चेष्टा मात्र से भीतिपूर्वक मेरे मोदक को प्रसरित अंगुलियों पर रखे बैठा है। हे उन्मत्तक ! मेरा लडडू लाओ। ( गुढार्थ—यह यौगन्धरायण रुमण्वद् के कथन को आदर पूर्वक मानकर मुझे मन्त्रावसर देने के लिये लज्जित बैठा है। )

श्रम०—आओ, आओ। इन मोदकों द्वारा मुझसे स्वस्ति कहलाओगे। ( गूढार्थ—आओ, आओ। स्वामी का सन्देश कहकर प्रसन्न करो। )

विदू०—ह ! ह ! अपने मोदकों से स्वस्ति वचन कहूँगा। मैंने भी गृहस्थ के हाथ से प्राप्त किया है। वे सब आपके लिये उपहार हो जायेंगे।

सो वि सम्मिद्धो होदु। एसो उन्मत्तओ अग्गिगिहं अहिमुट्टो गच्छइ। ट्ठिदो मज्झह्लो। पुब्वह्ले वि दाव अअं देसो सुञ्ञो भविस्सदि। जाव अहं वि इमाणि दक्खिणामासआणि मग्गगेहे णिक्खिविअ गच्छामि। एकस्स शाडिआए कय्यं अवरस्स मुल्लेण। [ही ही मदीयैः स्वस्ति वाचयामि। मयापि कौटुम्बिकस्य हस्तात् प्रतिग्रहगृहीतानि। तानि भवद्भि

---

ही शब्दोऽत्र संतोषसूचकः। कौटुम्बिकस्य = परिवारसमन्वितस्य, गृहस्थस्येत्याशयः। प्रतिग्रहगृहीतानि = प्रतिग्रहरूपेणाधिगतानि। सोऽपि गृहस्थः, समृद्धः = कृतार्थः, स्थितः = निष्पन्नः, मार्गगेहे = पुरोवर्तिनि भवने इति प्रथमोऽर्थः।

मदीयैः = स्वमनोगुप्तैः संदेशैः, स्वस्ति वाचयामि = कथयामि, प्रीणयिष्यामीत्याशयः। ते संदेशा मया प्रतिग्राह्यद्रव्यवत् प्रीतिपूर्वं गृहीताः, श्रुताश्च

---

वह गृहस्थ भी कृतार्थ हो। यह उन्मत्तक तो अग्नि भवन के सम्मुख जा रहा है। दोपहर हो गया। दोपहर के पूर्व तक ही यह स्थान शून्य रहेगा। मैं भी दक्षिणा में प्राप्त इन सुवर्ण खण्डों को इस रास्ते वाले घर में रखकर जाता हूँ। एक को साड़ी से प्रयोजन रहता है, दूसरे को मूल्य से। (गूढार्थ- ह! ह! अपने मन के संदेश को सुनाकर खुश करूँगा। इस संदेश को मैंने स्वामी से सुना है। उसको तुम सुनोगे तो वे तुम्हें वैसे ही आनन्ददायक होंगे जैसे उपहार स्वरूप प्राप्त किया हुआ पदार्थ। हमलोगों का स्वामी भी तुम दोनों के अनुकूल होने से सफल मनोरथ हो। यह यौगन्धरायण हमारे कार्य के लिये अग्नि गृह की ओर जा रहा है। यह स्थान दोपहर के पहले तक ही मन्त्रणा के लिये अनुकूल रहेगा। मैं भी स्वामी के सन्देश को यौगन्धरायण में जो सब प्रकार का उपाय सोचने में प्रवीण है, छोड़कर अर्थात् यौगन्धरायण से कहकर जाता हूं। स्वामी को तो वासवदत्ता से प्रयोजन है और यौगन्धरायण को स्वामी से मतलब है। आशय यह है कि वासवदत्ता के साथ कौशाम्बी को प्रयाण करना स्वामी की अभिलाषा है और स्वामी के कौशाम्बी जाने में यौगन्धरायण का प्रयोजन है। अतः स्वामी की अभीष्ट सिद्धि के लिये यौगन्धरायण अवश्य प्रयत्न करेगा।)

ऽप्युपायनं भविष्यति । सोऽपि समृद्धो भवतु । एवं उन्मत्तकोऽग्निगृहमभिमुखो गच्छति । स्थितो मध्याह्नः । पूर्वाह्णेऽपि तावदयं देशः शून्यो भविष्यति । यावदहमपीमान् दक्षिणामाषकान् मार्गगेहे निक्षिप्य गच्छामि । एकस्य शाटिकया कार्यमपरस्य मूल्येन । ]

( सर्वे अग्निगृहं प्रविशन्ति । )

यौग०—वसन्तक ! शून्यमिदमग्निगृहम् ।

विदूषक—आम भो ! सुञ्ञं खु इदं । [ आम् भोः ! शून्यं खल्विदम् । ]

यौग०—तेन हि परिष्वजेतां भवन्तौ ।

उभौ—बाढम् । [ परिष्वजेते ]

यौग०—भवतु भवतु । तुल्यपरिश्रमौ भवन्तौ । आस्तां भवान् । भवानप्यास्ताम् ।

---

मन्मुखादुपहारपदार्था इव तव प्रमोदावहा भविष्यन्ति । समृद्धो भवतु = अस्मत्स्वामी युवयोरुभयोरनुकूलवृत्त्या निर्विघ्नसंसिद्धमनोरथोभवतु । इमान् दक्षिणामाषकान् = स्वामिसंदेशान् , मार्गाणामुपायानां गेहे निकेतनभूते सर्वविधनिपुने यौगन्धरायणे, निक्षिप्य = परित्यज्य, निगद्येत्याशयः, गच्छामि=स्वस्थचित्तो भवन् व्रजामि । एकस्य=स्वामिनः, शाटिकया=वासवदत्तया, कार्यम् = प्रयोजनम् । अपरस्य=यौगन्धरायणस्य, मूल्येन = प्रयोजनेन, स्वामिनेत्याशयः, अथवा एकस्य = शाक्यभिक्षोः, शाटिकया = वस्त्रेण, प्रयोजनम्=कार्यम् , बुभुक्षोः मोदकेन प्रयोजनम् , एतावता मोदकं तस्मै दास्यामि, न रक्षिष्यामि । अपरस्य=मम, दक्षिणामाषकैः प्रयोजनम् । अतस्तान् रक्षितुमभिलषामीति द्वितीयोऽर्थः ।

---

( सभी अग्नि भवन में प्रवेश करते हैं )

यौग०—वसन्तक ! यह अग्नि गृह बिलकुल शून्य है ।

विदू०—हाँ, यह तो निश्चय ही शून्य है ।

यौग०—अतः तुम दोनों मुझे आलिङ्गन करो ।

दोनों—अच्छा । ( दोनों आलिङ्गन करते हैं ) ।

यौग०—अच्छा, अच्छा । आप दोनों ने समान परिश्रम किया है । आप बैठें, आप भी बैठें ।

( सर्वे उपविशन्ति )

यौग०—वसन्तक ? अपि दृष्टस्त्वया स्वामी ?

विदूषकः—आम भो ! दिट्ठो तत्तभवं । आम् भोः ! दृष्टस्तत्र-
भवान् । ]

यौग०—हन्त भोः अतिक्रान्तयोगक्षेमा रात्रिः । दिवस इदानीं प्रतिपाल्यते ।

अहः समुत्तीर्य निशा प्रतीक्ष्यते शुभे प्रभाते दिवसोऽनुचिन्त्यते।
अनागतार्थान्यशुभानि पश्यतां गतं कालमवेक्ष्य निर्वृतिः ॥ २॥

अतिक्रान्तः व्यतीतः योगक्षेमः सकुशलशरीरयात्रा यस्यां साऽतिक्रान्तयोगक्षेमा तथाभूता रात्रिः=निशा । इदानी=साम्प्रतम् , दिवसः = वासरः प्रतिपाल्यते = प्रतीक्ष्यते । सकुशलं व्यतीयेन्नवेत्याशयः ।

अन्वयः—अहा समुत्तीर्य निशा प्रतीक्ष्यते, शुभे प्रभाते दिवसः अनुचिन्त्यते, अनागतार्थानि अशुभानि पश्यतां गतं गतं कालम् अवेक्ष्य निर्वृतिः।

व्याख्या—अहः=वासरम् , समुत्तीर्य=केनाऽपि प्रकारेणकष्टं विनाऽतिवाह्य, निशा=रजनी, प्रतीक्ष्यते=प्रतिपाल्यते, शुभे=मङ्गलान्विते, प्रभाते=प्रत्यूषे दृष्टे सति, दिवसः=दिनम् , अनुचिन्त्यते = परिशोच्यते, कीदृशोऽद्यतनः कालः व्यतीष्यते इत्येवं रूपेणेत्याशयः, अनागतार्थानि = भविष्यत्कालसम्बन्धीनि, अशुभानि=अमङ्गलानि, पश्यतां=चिन्तयतां, गतं गतं कालम्=अस्माकं व्यतीते सर्वकालं सुखेनापगतम् , इति, अवेक्ष्य = विचार्यैव, निर्वृतिः=शान्तिः, भवतीति शेषः । वंशस्थविलं नाम वृत्तम् । तल्लक्षणं यथा—'वदन्ति वंशस्थविलं जतौ जरौ' इति ॥ २ ॥

( सभी बैठ जाते हैं। )

यौग०—वसन्तक ! क्या तुमने स्वामी से मुलाकात की।

विदू०—हाँ, स्वामी का दर्शन किया है।

यौग०—बड़े कष्ट की बात है, रात्रि तो कुशलता से बीत गई। किन्तु अब दिन की प्रतीक्षा हो रही है।

दिन व्यतीत होने पर रात्रि की प्रतीक्षा की जाती है, कुशलतापूर्वक पुनः प्रभात होने पर दिन की चिन्ता लगी रहती है। भविष्य के अनर्थों को सोचने वालों को सुख बीते हुए शुभ समय का स्मरण करके ही प्राप्त होता है ॥ २ ॥

रुमण्वान्—सम्यग् भवानाह । तुल्येपि कालविशेषे निशैव बहुदोषा बन्धनेषु । कुतः,

व्यवहारेष्वसाध्यानां लोके वा प्रतिरज्यताम् ।
प्रभाते दुष्टदोषाणां वैरिणां रजनी भयम् ॥ ३ ॥

यौग०—वसन्तक ! स्वामिना सह कथितं ननु ?

विदूषकः—आम भो ! चिरं एव्व च म्हि उत्तहोद ओवज्झो ।

---

कालविशेषे=कालगते भेदे, तुल्येऽपि=समानेऽपि, निशादिवसयोः समाने सत्यपीत्याशयः, बन्धनेषु=बन्धनान्वितेषु जनेषु, निशा=रजनी, एव=निश्चयेन, बहुदोषा=नैकविधकष्टप्रदा ।

अन्वयः—व्यवहारेषु असाध्यानां लोके अप्रतिरज्यतां वा प्रभाते दृष्टदोषाणां वैरिणां रजनी भयम् ।

व्याख्या—व्यवहारेषु = कार्येषु, असाध्यानां=गुणतो निर्णेतुमशक्यानां, लोके=जने, अप्रतिरज्यतां वा=उदासीनवृत्तिमङ्गीकुर्वतां स्नेहरहितानां वा, प्रभाते=प्रातःकाले, दृष्टदोषाणां=यथाकथञ्चित् विज्ञातच्छलानां, वैरिणां=अरीणां, रजनी=यामिनी, भयम्=भीतिप्रदा । अनुष्टुब्वृत्तमत्र ॥ ३ ॥

वसन्तक !=इति सम्बोधनम् । स्वामिना सह कथितं ननु ?=स्वामिसम्भाषणं ते जातं किम् ? अस्मत्सन्देशः स्वामिने निवेदितः किमित्याशयः ।

---

रुमण्वान्—आपने ठीक कहा । रात और दिन दोनों के एक-सा होने पर भी कैदियों को रात्रि ही अधिक कष्टप्रद होती है । क्योंकि—

व्यवहार में जिन लोगों के हृदय का पता नहीं चलता और जो संसार के लोगों से प्रेम नहीं करते तथा दिन में जिनके कपट भावनायें मालूम पड़ जाती हैं, ऐसे शत्रुओं की रात कैदियों के लिए भयदायक होती है ॥३॥

योग०—वसन्तक ! क्या स्वामी की और तुम्हारी बातचीत हुई ?

विदू०—हाँ, स्वामी ने चिरकाल तक रोका । वह चतुर्दशीपूजनहेतु स्नान कर रहे थे, इससे बड़ी देर तक उनकी प्रतीक्षा की ।

अज्ज चउद्दसीं ण्हाअमाणो पडिवालिदो अ। [ आम् भोः ! चिरमेव चास्मि तत्रभवतावबद्धः अद्य चतुर्दशीं स्नायमानः प्रतिपालितश्च । ]

यौग०—स्नातः स्वा [मी ? ]

विदूषकः—ण्हादो अत्तभवं । [ स्नातोऽत्रभवान् । ]

यौग०—कृतं देवकार्यम् ?

विदूषकः—आम भो ! पणाममत्तेण पूइदा । [ आम् भोः प्रणाममात्रेण पूजिता देवता; । ]

योग०—एकामपि बनुमतामवस्थां प्राप्तः स्वामी । कुतः,

स्नातस्य यस्य समुपस्थितदैवतस्य
पुण्याहघोषविरमे पटहा नदन्ति ।
तस्यैव कालविभवात् तिथिपूजनेषु
दैवप्रणामचलिता निगलाः स्वनन्ति ॥ ४ ॥

---

अवबद्धः=कथानुबद्धः, स्नायमानः प्रतिपालितश्च=मयाऽन्वासनेन प्रतीक्षितश्च ।

अन्वयः—स्नातस्य यस्य समुपस्थितदैवतस्य पुण्याहघोषविरमे पटहाः नदन्ति, कालविभवात् तस्यैव तिथिपूजनेषु दैवप्रणामचलिताः निगलाः स्वनन्ति ।

व्याख्या—स्नातस्य=विहिताभिषेकस्य, यस्य = उदयनस्य, समुपस्थितदैवतस्य=अर्चितदैवतस्य, पुण्याहघोषविरमे = सपर्याङ्गपुण्याहवाचनोपरान्ते, पटहाः=वाद्यविशेषाः, नदन्ति = शब्दायन्ते, कालविभवात् =समय-

---

यौग०—क्या स्वामी ने स्नान किया ।

विदू०—हाँ, स्वामी ने स्नान किया ।

यौग०—क्या देवताओं की पूजा की ?

विदू०—हाँ, केवल देवताओं को प्रणाम करके पूजा की ।

यौग०—स्वामी ऐसी अच्छी अवस्था को प्राप्त हो गये है ? (भाव यह है कि स्वामी ऐसी बुरी दशा को प्राप्त हो गये हैं ।) क्योंकि—

स्नान करके देवताओं की पूजा करने के बाद मङ्गलवचन के उपरान्त

रुमण्वान्ः—भवत इदानीं प्रयत्न उचितं तिथिसत्कारमानेष्यति स्वामिनः।

यौग०—वसन्तक। गच्छ भूयः स्वामिनं पश्य। विज्ञाप्यतां च स्वामी–या सा प्रयाणं प्रतीह प्रस्तुता कथा, तस्याः श्वः प्रयोगकाल इति। कुतः स्थानापगाहयवसशय्याभागेष्वाश्रयेषूपन्यस्तौषधिव्याजो नडागिरिर्मन्त्रौषधिनियमसम्भृतः पुराणकर्मण्यामोहितः। अनुकूलमा-

---

अभावात्, तस्यैव = उदयनस्य, तिथिपूजनेषु = चतुर्दश्यादितिथिनिमित्तक-विशेषदेवार्चनेषु, दैवप्रणामचलिताः = स्वेष्टदेवतानमस्कारसमये दोल्यमानाः, निगलाः = श्रृङ्खलाः एव, स्वनन्ति = शब्दं कुर्वन्ति। वसन्ततिलका नाम वृत्तम्—'ज्ञेयं वसन्ततिलकं तभजाजगौगः' इति लक्षणात्॥ ४॥

इदानीं = साम्प्रतं, भवतः = तव, प्रयत्नेन = प्रयासेन, उचितं = पुण्याहवाचनपटहवादनमङ्गलघोषानुयानं, तिथिसत्कारं = तिथिनिमित्तं देवपूजनम्, स्वामिनः = उदयनस्य, आनेष्यति = आगमिष्यति।

वसन्तक ! = इति सम्बोधनम्, गच्छ = व्रज, भूयः = पुनः, स्वामिनं = उदयनं, पश्य = अवलोकय, विज्ञाप्यतां च स्वामी = निवेद्यतां च स्वामी। प्रयाणं प्रति = कौशाम्बीनगरगमनं प्रति, इह = अस्मिन् स्थाने, प्रस्तुता = निवेदिता, कथा = वार्ता, तस्याः = कथायाः, श्वः = आगामिनि दिवसे, प्रयोगकालः = व्यवहारसमयः। स्थानावगाह्यवसशय्याभागेषु आश्रयेषु = 'नलगिरिः' इत्या-

---

जिस राजा के लिये पटह बजते थे, उसी के वास्ते काल के प्रभाव से विशेष तिथि पर भी देवताओं को प्रणाम करने के लिये हिलती हुई हाथ की बेड़ियाँ ही बज रही हैं॥ ४॥

रुमण्वान्—अब स्वामी आपके प्रयत्न से तिथिविशेष पर समुचित सत्कार को प्राप्त करेंगे।

यौग०—वसन्तक ! जाओ, स्वामी से फिर भेंट करो और उनसे कहो कि चलने के विषय में यहाँ जो बात हो रही थी उसको कार्यरूप में परिणत करने का अवसर कल है। नलगिरि के रहने, स्नान करने, भोजन करने और सोने के स्थान में औषधि रूपी छल रख दिया गया है, तथा

रुतमोक्तव्यः सज्जितो धूपः। रोषप्रतिकूलोऽस्य सज्जितः प्रतिगजमदः शालासन्निकृष्टमल्पसाधनं गृहमादीपयितुमग्नित्रासित्वाद् वारणानाम्। गजपतिचित्ताद्भ्रमणार्थं देवकुलेषु स्थापिताः शङ्खदुन्दुभयः। तेन नादेन सर्वसाधनपरिगतशरीरेणावश्यं श्वःप्रद्योतेन स्वामी शरणमुपगन्तव्यः। ततः स्वामिना शत्रोरनुमतेनैव बन्धनान्निष्क्रम्य सहव्यापन्नां घोषवतीं हस्तगतां कृत्वा नलगिरिः स्वाधीनः कर्तव्यः ततो व्यवस्थितासनस्तदानीं स्वामीं नलगिरौ,

---

स्यस्य गजस्य 'स्थिति-स्नानतृणादिभक्षण-शयनादिस्थानेषु, उपन्यस्तः = संस्थापितः, औषधिरूपो व्याजः = छलः यस्य स उपन्यस्तौषधिव्याजो नलगिरिः=एतन्नामको हस्ती, मन्त्रौषधिनियमसम्भृतः = मन्त्रौषध्योः नियमेन = नियतकालप्रयोगेण, सम्भृतः=पुष्टः (शिक्षितः) इत्याशयः। पुराणकर्मव्यामोहितः—स्वनित्यकर्मणि सन्नद्धः, अनुकूलमारुतमोक्तव्यः=अनूकूलपवनत्यक्तव्यः, सज्जितो धूपः=निर्मापितोऽगुरुः। रोषप्रतिकूलः = कोपवृद्धिकरः, शालासन्निकृष्टम् = देवालयाऽन्तिकम्, सर्वसाधनपरिगतशरीरेण=पूर्वोक्तमन्त्रौषधिप्रतिगजमददेवालयान्तिकगृहदहनशङ्खादिनादैः परिवेष्टितात्मना, ततः=तदनन्तरं, स्वामिना=उदयनेन, शत्रोरनुमतेनेव=रिपोराज्ञयैव, बन्धना-

---

नलगिरि को भी मन्त्र एवं औषधियों से ठीक कर लिया है। वह अपने प्रतिदिन के काम में आसक्त रहेगा। धूप भी तैयार कर ली गई है जोकि अनुकूल हवा होने पर छोड़ दी जायगी। रोष को बढ़ानेवाला प्रतिगजमद भी निर्मित कर लिया गया है। देवालय का समीपवर्ती घर भी जलाने के वास्ते अल्पसाधनयुक्त कर लिया गया है, क्योंकि हाथी आग से डरते हैं। उस गजराज के चित्त को पागल करने के वास्ते मन्दिरों में यथास्थान शंख और नगाड़े रख दिये गये हैं। उस शब्द को सुनकर प्रद्योत, जिसके वास्ते सब सामग्रियां तैयार कर दी गई हैं, अवश्य कल स्वामी की शरण में जायगा। तब शत्रु के ही आदेश से स्वामी बन्धन से मुक्त होकर घोषवती को जो उनके साथ ही विपत्ति में पड़ गई है, लेकर नलगिरि को अपने वश में कर लेंगे। तदनन्तर उस नलगिरि पर आरूढ़ होकर स्वामी—

सेनाभिर्मनसानुबद्धजघनं कृत्वा जवे वारणं
सिंहानामसमाप्त एव विरुते त्यक्त्वा सविन्ध्यं वनम् ।
एकाह्ने व्यसने वने स्वनगरे गत्वा त्रिवर्णां दशां
येनैव द्विरदच्छलेन नियतस्तेनैव निर्वाह्यते ॥ ५ ॥

---

निष्क्रम्य=बन्धनाद्विमुच्य, सहव्यापन्नां=भवतास्माकं विपद्ग्रस्तां, घोषवतीं = एतन्नामिकां वीणां, हस्तगतां कृत्वा=स्वायत्तीकृत्य, नलगिरिः=एतन्नामको गजः, स्वाधीनः कर्तव्यः=विमोक्तव्यः, ततः=घोषवत्या स्वाधीनेसम्भूते नलगिरौ, व्यवस्थितम् आसनं येन सः व्यवस्थितासनः= कृतावरोहः, स्वामी= उदयनः ।

अन्वयः—सेनाभिः मनसानुबद्धजघनं वारणं जवे कृत्वा सिंहानां विरुते असमाप्त एव सविन्ध्यं वनं त्यक्त्वा एकाह्ने व्यसने स्वनगरे वने वा 'इति' त्रिवर्णां दशां गत्वा येनैव द्विरदच्छलेन नियतः तेनैव निर्वाह्यते ।

व्याख्या—सेनाभिः = प्रस्थितं स्वामिनमनुधाव्यजिघृक्षुभिः रिपुपृतनाभिः, मनसानुबद्धजघनं=मनसैवानुसृतपृष्ठम् , वारणं = गजं, जवे = वेगे, कृत्वा = विधाय, मनसाऽनुसरणं विनिश्चित्य शरीरेण विहितप्रयत्ना अपि रिपुसेना न गृह्णीयुस्तथा गजं वेगातिशयसमन्वितं विधायेत्याशयः, सिंहानां= पञ्चास्यानां, विरुते=गर्जने, असमाप्त एव=अनवसान एव, सविन्ध्यं वनं= विन्ध्यादिसहितारण्यम् , त्यक्त्वा=पारङ्कृत्वा, एकाह्ने=एकस्मिन्नेव वासरे, व्यसने=बन्धने, स्वनगरे = कौशाम्ब्याम् , वने वा=विन्ध्यकानने वा, 'इति' त्रिवर्णाम्=त्रिविधां, दशां=अवस्थां, गत्वा=अनुभूय, येनैव = यत्प्रकारेणैव, द्विरदच्छलेन=हस्तिव्याजेन, नियतः=रिपुवशङ्गतः, तेनैव=वारणव्याजेन, निर्वाह्यते=मुच्यत अपीत्याशयः । शार्दूलविक्रीडितं नाम वृत्तम्—'सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्' इति लक्षणात् ॥ ५ ॥

---

अपने हाथी को, जिसका पीछा शत्रुसेना मन के समान वेग से कर रही है, जोर से भगाकर विन्ध्यगिरि समेत कानन को लाँघकर सिंहों की गर्जन समाप्त होने के पूर्व ही एक ही दिन में तीन अवस्था को सम्प्राप्त कर अर्थात् कारागार, वन तथा अपना नगर—जिस छल से वह पकड़ा गया उसी छल से वह निकल कर भाग भी रहा है ॥ ५ ॥

इति ।

रुमण्वान्—वसन्तक ! किमिदानीं चिन्त्यते ?

विदूषकः—एव्वं चिन्तेमि महन्तो खु भवदो पयत्तो विवज्जिःस्सिदि त्ति। [ एवं चिन्तयामि महान् खलु भवतः । [ प्रयत्नो विपत्स्यत इति । ]

उभौ—न खलु वयं विज्ञातारः ।

विदूषकः—अहं पुठमं पच्चा भवन्तो । [अहं प्रथमं पश्चाद् भवन्तौ ।]

यौग०—अथ किंकृता कार्यविपत्तिः ?

विदूषक—वच्छराअस्स अण्णकय्यदाए। [वत्सराजस्यान्यकार्यतया] ।

यौग०—कथमिव ?

विदूषकः—सुणह भवन्तो । [श्रृणुतां भवन्तौ ]

उभौ—अवहितौ स्वः ।

विदूषकः—जा सा कालट्ठमी अदिक्कन्दा, तहिं तत्तहोदी वासवःदत्ता णाम राअदारिआ धत्तीदुदीआ कण्णआदंसणं णिद्दोसं त्ति करिअ

---

आत्ममोचनकौशाम्बीप्रयाणातिरिक्तं कार्यं यस्य तस्य भावस्तत्ता तया अन्यकार्यतया ।

---

रुमण्वान्—वसन्तक ! इस समय क्या सोच रहे हो ?

विदू०—यही विचार कर रहा हूँ कि आपका यह महान् प्रयत्न निष्फल जायगा ।

दोनों—हमलोग तो कारण नहीं जानते ।

विदू०—पहले मैं जानूँगा फिर आप दोनों जानेगें ।

यौग०—काम क्यों असफल होगा ?

विदू०—वत्सराज के दूसरे काम में लगने के कारण से ।

यौग०—कैसे ?

विदू०—आप दोनों सुनें ।

दोनों—हम दोनों सावधान हैं ।

विदू०—जो कालाष्टमी बीत गई, उसी दिन राजकन्या वासवदत्ता धात्री को साथ लेकर, लड़की का देखना निर्दोष समझकर पालकी में,

अवणीदकञ्चुआए सिविआए ओघट्टिदपणालीपस्सुदसलिलविसमं राअमग्गं परिहरिअ जं तं वन्धणदुवारस्स अग्गदो भअवदीए जक्खिणीये ठ्ठाणं, तस्सिं देवकय्यं कत्तु गआ आसी। [ या सा कालाष्टमी अतिक्रान्ता, तस्यां तत्रभवती वासवदत्ता नाम राजदारिका धात्रीद्वितीया कन्यकादर्शनं निर्दोषमिति कृत्वाऽपनीतकञ्चुकायां शिविकायामवघट्टितप्रणालीप्रस्रुतसलिलविषमं राजमार्गं परिहृत्य यत्तद्बन्धनद्वारस्याग्रतो भगवत्या यक्षिण्याः स्थानं, तस्मिन् देवकार्यं कर्तुं गतासीत्। ]

यौग०—ततस्ततः ?

विदूषकः—तदो तत्तभवं तं दिअसं अब्भन्तरबन्धणपरिरक्खअं सिवअं णाम राअदासं अणुमाणिअ बन्धणदुवारे णिक्कन्तो। [ततस्तत्रभवान् तं दिवसमभ्यन्तरबन्धनपरिरक्षकं शिवकं नाम राजदासमनुमान्य बन्धनद्वारे निष्क्रान्तः।]

---

कालाष्टमी=कालीदेव्याः पूजनार्थं निश्चिता याऽष्टमी तिथिः सेत्याशयः, अतिक्रान्ता=व्यतीता, धात्री एव द्वितीया यस्याः सा धात्रीद्वितीया=परिचारिकासहाया, शिविकायां=यानविशेषे, अवघट्टितायाः=अवरुद्धायाः, प्रणाल्याः=उदकमार्गात्, प्रस्रुतैः=अभिष्यन्दमानैः, सलिलैः = वारिभिः, विषमम्=दुर्गमम् इति अवघट्टितप्रणालीप्रस्रुतसलिलविषमम्। राजमार्ग=राजपथं, परिहृत्य=त्यक्त्वा, देवकार्यं = देवतापूजनं विधातुं, गतासीत्=गतवती।

ततः = तदनन्तरं, तत्रभवान् = उदयनः, अभ्यन्तरबन्धनपरिरक्षकं=अन्तःकारागृहसेवकम्, अनुमान्य=अनुनीय, निष्क्रान्तः=निर्गतः।

---

जिसका परदा हटा दिया गया था, बैठकर सड़क को जो कि नाली के जल के रुक जाने के कारण दुर्गम हो गई थी छोड़कर, उसके कैद खाने के दरवाजे के आगे जो यक्षिणी का स्थान है, उसमें देवकार्य करने के वास्ते गई थी।

यौग०—तब, तब।

विदू०—तब राजा वत्सराज शिवक नामक राजा के कर्मचारी को, जो उस दिन कारागार की रखवाली में था, प्रसन्न कर कैदखाने के दरवाजे पर आये।

उभौ—ततस्ततः ?

विदूषकः—तदो पुरुसक्खन्धपरिवट्टणट्ठिदाए सिविआए पकामं दिट्ठा सा राअदारिआ । [ ततः पुरुषस्कन्धपरिवर्तनस्थितायां शिबिकायां प्रकामं दृष्टा सा राजदारिका ।]

यौग०—ततस्ततः ?

विदूषकः—किं तदो तदो त्ति । बन्धणं दाणिं पमदवणं सम्भाविअ पउत्तो राअलीलं कतुं । [ किं ततस्तत इति ? बन्धनमिदानीं प्रमदवनं संभाव्य प्रवृत्तो रागलीलां कर्तुम् । ]

यौग०—न खलु तां प्रति समुत्पन्नाभिलाषः स्वामी ?

विदूषकः—भो ! सञ्चारिणो अणत्थ त्ति ईदिसं एव्व । [ भोः ! सञ्चारिणोऽनर्था इतीदृशमेव । ]

---

पुरुषाणां=शिविकावाहिनां, स्कन्धपरिवर्तने=श्रमापनोदायांसविनिमये, स्थितायाम् इति पुरुषस्कन्धपरिवर्तनस्थितायां = शिबिकावाहकांसविनिमय-काले, प्रकामम् = यथेष्टम् , दृष्टा = अवलोकिता, सा राजदारिका = वासवदत्ता ।

बन्धनं = कारागारम्, इदानीं = साम्प्रतम् , प्रमदवनं = क्रीडोपवनं, सम्भाव्य = मत्वा, रागलीलां=कामचेष्टां, कर्तुं=विधातुं, प्रवृत्तः=प्रारभत ।

समुत्पन्नाभिलाषः =उपजातरागः । एतेन = स्वामिना उदयनेन, यथा-

---

दोनों—फिर क्या हुआ ?

विदू०—जब पालकी ढोने वाले कंधा बदलने के लिये रुके, उस समय स्वामी ने राजकुमारी को खूब अच्छी तरह देखा ।

यौग०—तब क्या हुआ ?

विदू०—पुनः पुनः 'फिर क्या, फिर क्या ?' क्या कहते हो । इस समय बन्धन को प्रमदवन जानकर कामातुर हो कामलीला करने में प्रवृत्त हो गये ।

यौग०—क्या उसे देखकर स्वामी को उसके प्रति अनुराग उत्पन्न नहीं हुआ ?

विदू०—अनर्थ अकेले नहीं होते । बात कुछ ऐसी ही हुई ।

यौग०—सखे ! रुमण्वन् ! स्थिरीक्रियतामात्मा । अनेनैव वेषेण जरा गन्तव्या ।

विदूषकः—भो ! अहं च एदेण उत्तो—भणेहि जोअन्धराअणस्स जहसमत्थिदा समत्थणा ण रोअदे मे । समाणे गमणे पज्जोदस्स अवमाणविसेसो चिन्तीअदि । मा कामप्पधाण त्ति मं अवमण्णेहि । अवमाणस्स अवचिदिं अण्णेसामि त्ति । [ भोः ! अहं चैतेनोक्तः—भण यौगन्धरायणाय यथासमर्थिता समर्थना न रोचते मे । समाने गमने प्रद्योतस्यावमानविशेषश्चिन्त्यते । मा कामप्रधान इति मामवमन्यस्व । अवमानस्यापचितिमन्विष्यामीति । ]

यौग०—अहो शत्रुजनापहास्यमभिधानम् । अहो निरपत्रपता खलु बुद्धेः ! अहो सुहृज्जनसन्तापकारणम् ! अदेशकाले ललितं कामयते स्वामी कुतः.

---

समर्थितः = त्वदनुमोदितप्रकारा, समर्थना=विचारणा । प्रद्योतस्यावमानविशेषः = रिपोरपमानं यथा स्यात्तथोपायविशेषः, (वासवदत्तापहरणरूपापमानः इत्याशयः । चिन्त्यते = विचार्यते । अवमानस्य = स्वापमानस्य, अपचितिम् = निष्कृतिम् , अन्विष्यामि=गवेषयामि।

अहो !—इति खेदसूचकमव्ययम् । निरपत्रपता = निर्लज्जता, सुहृज्जनसन्तापकारणम् = स्वमित्रजनकष्टकारणम् , अदेशकाले = अनुपयुक्ते समये, ललितं—कामवासनाम् कामयते=चेष्टते, स्वामी—वत्सराजोदयनः ।

---

यौग०—मित्र रुमण्वन् ? चित्त को स्थिर करो । इसी रूप में बुढ़ापा आवेगी ।

विदू०—स्वामी ने मुझसे कहा कि जाकर यौगन्धरायण से कहो कि तुम्हारा परामर्श मुझे पसन्द नहीं है । कौशाम्बी तो प्रत्येक स्थिति में जाना ही है, किन्तु मैं तो प्रद्योत का जिसमें अपमान हो, वह सोच रहा हूँ । मुझे कामी समझकर मेरा तिरस्कार मत करो । मैं तो अपमान का बदला लेने की बात सोच रहा हूँ ।

यौग०—अहा, शत्रुजनों से हँसी कराई जा रही है । इस बेशरमी को

शक्ता दर्पयितुं स्वहस्तरचिता भूमिः कटप्रच्छदा
पर्याप्तो निगलस्वनश्चरणयोः कन्दर्पमालम्बितुम् ।
कः श्रुत्वा न भवेद्धि मन्मथपटुः प्रत्यक्षतो बन्धने
रक्षार्थं परिगण्यमानपुरुषै राजेति शब्दापनम् ॥ ६ ॥

---

अन्वयः—स्वहस्तरचिता कटप्रच्छदा भूमिः दर्पयितुं शक्ताः, चरणयोः निगलस्वनः कन्दर्पम् आलम्बितुम् पर्याप्तः बन्धने रक्षार्थं परिगण्यमान-पुरुषैः राजेति शब्दापनं प्रत्यक्षतः श्रुत्वा कः मन्मथपटुः न भवेत् ।

व्याख्या—स्वहस्तेनरचिता स्वहस्तरचिता = निजकरविनिर्मिता, कट-प्रच्छदा = तृणमयास्तरणा;, भूमिः = धरा, दर्पयितुं = मदयितुं, शक्ता = समर्था, चरणयोः=पादयोः, निगलस्वनः=निगडारावः, कन्दर्पम्=मदनम्, आलम्बितुं=उद्दीपयितुं, पर्याप्तः=समर्थः, बन्धने=कारागारे, रक्षार्थं= रक्षानिर्मित्तम्, परिगण्यमानपुरुषैः=परिगणितानुचरैः, राजेति शब्दापनं= 'राजा' इति सम्बोधनम्, प्रत्यक्षतः = सुस्पष्टतः, श्रुत्वा = समाकर्ण्य, कः=बन्दीजनः, मन्मथपटुः=कामोद्दीप्तः न=नहि, भवेत्=स्यात् । 'सर्वोऽपि भवेत्' इति उदयनोपहासे काकुः । वस्तुतो न कोऽपि भवेत् । अस्मत्स्वामी वत्सराजोदयनस्तथाविधो यद् भवति, तदस्माकं भाग्यदोषादित्याशयः । शार्दूलविक्रीडितं नाम वृत्तम् 'सूर्याश्वैर्यदि मःसजौ सततगाः शार्दूलविक्रीडितम्' इति लक्षणात् ॥ ६ ॥

---

धिक्कार है । मित्रों को कष्ट प्रदान करने वाली इस बात पर शोक है । स्वामी असमय में और परदेश में काम विलास की अभिलाषा प्रकट कर रहे हैं । क्योंकि—

अपने हाथों से निर्मित चटाई ही है बिछौना, जिस पृथ्वी पर वह धरा अवश्य ही मदोत्पन्न करने में सक्षम है । पैरों में पड़ी हुई जंजीरों की कामोद्दीपन कर सकती है । कैदखाने में अपनी रखवाली के लिये नियुक्त पुरुषों से 'राजा' शब्द से सम्बोधित होकर भला कौन पुरुष कामातुर न होगा ? ॥ ६ ॥

विदूषकः—भो ! दंसिदो सिणेहो। णिव्विट्ठं पुरुसआरं। साहु उज्झिअ णं गच्छामो। [ भोः ! दर्शितः स्नेहः। निर्दिष्टः पुरुषकारः साधूज्झित्वैनं गच्छामः। ]

यौग०—वसन्तको भवान् ननु। वसन्तक ! मा मैवम्।

परित्यजाम सन्तप्तं दुःखेन मदनेन च।
सुहृज्जनमुपाश्रित्य यः कालं नावबुध्यते ॥ ७ ॥

विदूषकः–एव्वं एव्व जरं गमिस्सामो। [ एवमेव जरां गमिष्यामः। ]

यौग०—तन्ननु श्लाघ्यम्।

विदूषकः—सिलाघणीओ भवे, जदि लोओ जाणादि। [ श्लाघनीयं भवेद्, यदि लोको जानाति। ]

---

भो इति विषादे, पुरुषकारः निर्दिष्टः=प्रयत्नो यावच्छक्तिकृतः, उज्झित्वा = परित्यज्य।

अन्वयः—दुःखेन मदनेन च संतप्तं परित्यजाम यः सुहृज्जनम् उपाश्रित्य कालं न अवबुध्यते।

व्याख्या—दुःखेन=बन्धनव्यसनेन, मदनेन च=मन्मथेन च, सन्तप्तं=सम्पीडितं, परित्यजाम=त्यक्त्वामुक्तोभवेम, यः=पुरुषः सुहृज्जनम्=मित्रवर्गम्, उपाश्रित्य=तद्वचनमनुसृत्य, कालं=समयं, न = नहि, अवबुध्यते = वेत्ति, साम्प्रतं समयोऽनुकूलोऽस्ति न वेति विचारं कर्तुं न समर्थस्तथाविधस्यापि जनस्य मोचनं नैव समुचितमित्याशयः। अनुष्टुब्वृत्तञ्च ॥ ७ ॥

---

विदू०—हमलोगों ने अपना प्रेम प्रदर्शित कर दिया। यथाशक्ति प्रयत्न भी कर चुके। अब इनको छोड़कर हमलोगों को चल देना चाहिये।

यौग०—आप वसन्तक हैं। ऐसा मत कहो।

जो दुःख और काम से पीड़ित है तथा जो मित्रों की बातों को मानकर समयानुसार कार्य नहीं कर सकता, क्या उसको छोड़ दें ? अर्थात् कदापि नहीं ॥ ७ ॥

विदू०—इसी वेष में जरावस्था को प्राप्त होंगे।

यौग०—यह तो प्रशंसनीय है।

विदू०—यदि लोग अवगत हो जाँय तो यह प्रशंसा योग्य हो सकता है।

यौग०—न नः कार्यं लोकेन, स्वामीप्रियार्थोऽयमारम्भः ।

विदूषकः—सो वि दाव ण जाणादि । [ सोऽपि तावन्न जानाति । ]

यौग०—काले ज्ञास्यति ।

विदूषक;—कदमो दाणि सो कालो । [ कतम इदानीं स कालः ]

यौग०—यदेयमारम्भसिद्धिः ।

विदूषकः—तदो तादिसो भवं बन्धणादो राआणं अन्तेउरादो राअदारिअं उभे णिय्यादेदु । [ ततस्तादृशो भवान् बन्धनाद्राजानमन्तः-पुराद्राजदारिकामुभे निर्यातयतु । ]

रुमण्वान्—इह भवता द्रष्टव्यम् ।

यौग०—उभयमिति । बाढम् । इयं द्वितीया प्रतिज्ञा—

---

आरम्भसिद्धिः=वत्सराजोदयनस्य कौशाम्बीप्रापणप्रयत्नस्य साफल्यम् ।

ततः=तदनन्तरं, तादृशः = निजप्रयासफलदर्शनाभिनिवेशी, भवान् = यौगन्धरायणः, बन्धनात्=कारागृहात् , राजानम् = स्वामिनमुदयनं, राज-दारिकां = वासवदत्तां निर्यातयतु=हरतु ।

इह=वसन्तकोपन्यस्तेऽर्थे, भवता द्रष्टव्यम्=विमर्शनीयम् , औदासीन्यं नावलम्बनीयमित्याशयः ।

उभयम्=उदयनापहरणं वासवदत्तापहरणञ्चेति ।

---

यौग०—हमलोगों को संसार से क्या मतलब ? हमारा काम तो स्वामी का प्रिय करना है ।

विदू०—वे भी नहीं जानते ।

यौग०—समय आने पर जान जायँगे ।

विदू०—वह समय कब होगा ?

यौग०—जब हमलोगों का कार्य सफल हो जायगा ।

विदू०—यदि आप यह चाहते हैं तो कारागार से राजा को और अन्तःपुर से वासवदत्ता—इन दोनों को हर ले चलें ।

रुमण्वान्—इस बात पर आप विचार करें ।

यौग०—दोनों ( अर्थात् दोनों काम वासवदत्ता और वत्सराज को लेकर भागना ) अच्छा, यह मेरी दूसरी प्रतीज्ञा है—

सुभद्रामिव गाण्डीवी नागः पद्मलतामिव ।
यदि तां न हरेद् राजा नास्मि यौगन्धरायणः ॥ ८ ॥

अपि च,

यदि तां चैव तं चैव तां चैवायतलोचनाम् ।
नाहरामि नृपं चैव नास्मि यौगन्धरायणः ॥ ९ ॥

---

अन्वयः—सुभद्रां गाण्डीवी इव, पद्मलतां नाग इव, यदि तां राजा न हरेत् ( अहम् ) यौगन्धरायणः न अस्मि ।

व्याख्या—सुभद्रां=श्रीकृष्णभगिनीं, गाण्डीवी = अर्जुनः, इव = यथा, पद्मलतां = पङ्कजवल्लरीं, नागः = वारणः, इव = यथा, यदि = चेत्, तां=वासवदत्तां, राजा=उदयनो नृपः, न=नहि, हरेत्=अपहरणं कुर्यात्, ( अहम् ) यौगन्धरायणः=एतन्नामा, न=नहि, अस्मि=भवामि । अनुष्टुब्वृत्तञ्चात्र ॥ ८ ॥

अन्वयः—यदि तां च, तं च, ताम् आयतलोचनां च नृपं च न आहरामि, यौगन्धरायणः न अस्मि ।

व्याख्या—यदि = चेत्, तां = घोषवतीं वीणाम्, चैव=तथैव, तं = नलगिरिं हस्तिनम्, चैव = तथैव, तां=प्रथिताम्, आयते विशाले लोचने यस्याः सा आयतलोचनां ताम् आयतलोचनां = विशालनयनां वासवदत्तां चैव=तथैव, नृपं=राजानमुदयनं, चैव=तथैव, न = नहि, आहरामि = प्रद्योतसकाशादाहृत्य कौशाम्बीं न प्रापयामि, 'तर्हि' यौगन्धरायणः = एतन्नामा, न=नहि, अस्मि = भवामि । अनुष्टुब्वृत्तम् ॥ ९ ॥

---

सुभद्रा को अर्जुन की तरह, कमलवल्ली को हाथी के समान यदि राजा और उस वासवदत्ता को हम न हरण कर लें तो मैं यौगन्धरायण नहीं ॥८॥

और भी—

यदि उस घोषवती वीणा को और नलगिरि हाथी को तथा उस विशाल नेत्रवाली वासवदत्ता को एवं राजा वत्सराज को हरण कर कौशाम्बी न ले जाऊँ तो मेरा नाम यौगन्धरायण नहीं ॥ ९ ॥

( कर्णं दत्त्वा ) अये शब्द इव । ज्ञायतां शब्दः ।

विदूषकः—भो ! तह । ( निष्क्रम्य प्रविश्य ) भो ! पडिउत्तदिवस-विस्सम्भेण अविरलं सञ्चरन्तो जणो दीसइ । किं दाणि करम्ह ? [ भोस्तथा । भोः ! परिवृत्तदिवसविस्रम्भेणाविरलं सञ्चरन् जनो दृश्यते । किमिदानीं कुर्मः ?]

रुमण्वान्—तेन हि चतुर्द्वारमग्निगृहं, भिद्यतां नः सङ्घातः ।

यौग०—न न । अभिन्नो नः सङ्घातः । भिद्यतामरिसङ्घातः । स्वकार्यमनुष्ठीयताम् ।

उभौ—तह । [ तथा ] (निष्क्रान्तौ ।)

उन्मत्तकः—ही ही चन्दं गिलदि लाहू । मुञ्च मुञ्च चन्दं । यदि

---

परिवृत्तदिवसविस्रम्भेण—परिवृत्तः प्राच्याः प्रतीच्यभिमुखं निवृत्तः यो वासरः अपराह्ण इत्याशयः, तस्मिन् विस्रम्भात् = आतपोष्मशान्तिहेतोः, अविरलं यथा स्यात्तथा अविरलं सञ्चरन्=भ्रमन्, जनः=पुरुषः, दृश्यते = अवलोक्यते ।

भिद्यतां = विश्लिष्यतु, संघातः = समुदायः ।

अरिसंघातः = रिपुसमुदायः, स्वकार्यम् = अग्निभवनाद् , विनिःसृत्य स्वामिसमीपगमनम्, अनुष्ठीयताम् = क्रियताम् ।

---

( कान देकर ) अरे ! कुछ शब्द-सा सुनाई पड़ रहा है, इसका पता लगाओ ।

विदू०—अच्छा, ( निकलकर तथा पुनः प्रवेश कर ) दोपहर बीत जाने से धूप की कमी के कारण लोग घूम फिर रहे हैं । अब क्या करें ?

रुमण्वान्—अग्निगृह से हमलोगों को पृथक्-पृथक् चार तरफ से निकलना चाहिये ।

यौग०—नहीं, नहीं । हमारा समूह अभेद्य है, अतः इसका भेदन न किया जाय, किन्तु अरिवर्ग का भेदन किया जाय । हमलोगों को अपना काम करना चाहिये ।

दोनों—ठीक है । ( निकल जाते हैं । )

उन्म०—ही ही ही । राहु चन्द्रमा को निगल रहा है । चन्द्रमा को

ण मुञ्चेशि, मुहं दे पाडिअ मुञ्चावइस्सं। एशे एशे दुट्ठअश्शे परिब्भट्ठे आअच्छदि। एशे एशे चउप्पहवीविआअं। जाव णं आलुहिअ बलि भक्खिस्सं एशे एशे दालअभट्टा! मं तालेह। माखु माखु मं तालेह। किं मणाशि—अम्हाणं किं पि णच्चेहि त्ति। दक्खह दक्खह दालअ- भट्टा। एशे दाअअभठ्ठा पुणी वि मं तालेह इट्टिआहि। मा खु मा खु तालेह। तेण हि अहं पि पुम्हे तालेमि। [ही ही चन्द्रं गिरति राहुः। मुञ्च मुञ्च चन्द्रम्। यदि न मुञ्चसि, मुखं ते पाटयित्वा मोचयिष्यामि। एष एष दुष्टाश्वः परिभ्रष्टः आगच्छति। एष एप चतुष्पथवीथिकायाम्। यावदेनमारुह्य बलिं भक्षयिष्यामि। एते एते दारकभर्तारः! मा ताडयथ। मा खलु मा खलु मां ताडयत। किं भणथ—अस्माकं किमपि नृत्येति। पश्यत पश्यत दारकभर्तारः! एते दारकभर्तारः! पुनरपि मां

---

चन्द्रं = वत्सराजोदयनम्, राहुः = प्रद्योतः, गिरति = परिभवति, दुष्टश्चासौ अश्वश्चेति दुष्टाश्वः = उद्दण्डो हयः, परिभ्रष्टः = बन्धनमुक्तः, बलिं = भिक्षाम्।

दुष्टाश्वः = प्रद्योतः, परिभ्रष्टः = सन्मार्गच्युतः, चतुष्पथवीथिकायां = चतुष्पथवीथिकावत् काञ्चिदप्रतिस्वत्वमपरिणीतत्वात् अप्राप्तायाम, अर्थात् तत्कन्यायां वासवदत्तायां विषये एनं=प्रद्योतम्, आरुह्य = न्यक्कृत्य,

---

छोड़ो, छोड़ों। यदि नहीं छोड़ोगे तो तुम्हारा मुख फाड़कर छुड़ा लूँगा। यह दुष्ट घोड़ा बन्धन छुड़ाकर आ रहा है। लो, यह तो चौराहे की गली में आ गया है। इस पर चढ़कर बलि भक्षण करूँगा। ये मालिक लड़के मुझे मार रहे हैं। मुझे मत मारो, मत मारो। क्या कहते हो—कुछ नाच करो। बालक स्वामियों! देखो, देखो। ये बालक मालिक फिर भी मुझे छड़ी से मार रहे हैं। मत मारो, मत मारो। मैं भी उस छड़ी से आप लोगों को मारूँगा। (गूढार्थ—राजा प्रद्योत वत्सराज को दबा रहा है। मैं तुम्हें मारकर उसे मुक्त करा लूँगा। दुष्ट प्रद्योत छल प्रयोग करने के कारण सन्मार्ग से भ्रष्ट हो गया है। उसकी कन्या वासवदत्ता का अपहरण करने से

ताडयथ यष्टिभिः। मा खलु मा खलु ताडयत। तेन ह्यहमपि युष्मान् ताडयामि। ]

( निष्क्रान्तः। )

तृतीयोऽङ्कः।

---

वासवदत्तापहरणेन च परिभूय बलिम् उपहारवत् प्रियम् कौशाम्बीप्रयाणम्, भक्षयिष्यामि=साधयिष्यामि—इति गूढार्थः।

दारकाश्च ते भर्तारः इति दारकभर्तारः।

तृतीयोऽङ्कः समाप्तः।

---

प्रद्योत को तिरस्कृत कर कौशाम्बी प्रयाणरूप प्रिय कार्य को सिद्ध करूँगा। अर्थात् वासवदत्ता का हरणकर स्वामी को कौशाम्बी पहुँचाऊँगा। )

( निकल जाता है। )

॥ तृतीय अंक समाप्त ॥

## अथ चतुर्थोऽङ्कः

( तत प्रविशति भटः । )

भटः—कों कालो अहं भट्टिदारिआए वासवत्ताए उदए कीलिदुकामाए भद्दवदीपरिचारअ गत्तसेवअं ण पेक्खामि। भाव पुप्फदन्तअ ! गत्तसेवअं ण पेक्खसि। किं भणासि-एसो गत्तसेवओ कण्डिलसुण्डिगिणीए गेहं पविसिअ सुरं पिबदि त्ति। गच्छदु भावो। (परिक्रम्य) इदं कण्डिलसुण्डिगिणीए गेहं। जाव णं सद्दावेमि। भो गत्तसेवअ ! गत्तसेवअ ! [ कः कालोऽहं भर्तृदारिकाया वासवदत्ताया उदके क्रीडितुकामाया भद्रवतीपरिचारकं गात्रसेवकं न प्रेक्षे। भाव पुष्पदन्तक ! गात्रसेवकं न प्रेक्षसे ? किं भणसि-एष गात्रसेवकः कुण्डिलशौण्डिक्या गेहम्। यावदेनं शब्दापयामि। भो गात्रसेवक ! गात्रसेवक !! ]

---

कः कालः = क्रियान् समयो यापितः, अहं = भटः, भर्तृदारिकायाः = राजकुमार्याः, वासवदत्तायाः = एतन्नामिकायाः, उदके = जले, क्रीडितुं कामो यस्याः सः तस्याः क्रीडितुकामायाः = खेलाऽभिलाषिण्याः, भद्रवतीपरिचारकं = 'भद्रवती' इत्येतन्नामिकायाः हस्तिन्याः सेवकम्, गात्रसेवकं= एतन्नामानमनुचरं, न प्रेक्षे=न पश्यामि। भाव इति पदं नाटकेषु सम्बोधयितुं प्रयुज्यते। कण्डिलायाः मत्तायाः शौण्डिल्याः मद्यविक्रयिण्याः (शुण्डा (मद्यम्) पण्यम् अस्य इति शौण्डिकी 'तदस्य पण्यम्' इति ठक्) गेहम् = गृहम्, सुरां=मदिरां, शब्दापयामि=आवाहनं करोमि।

---

( तदनन्तर भट प्रवेश करता है। )

भट—जल में क्रीडा करने की इच्छुक स्वामी की कन्या वासवदत्ता की हथिनी भद्रवती के महावत गात्रसेवक को कितनी देर से नहीं देख रहा हूँ ? भाव पुष्पदन्तक ! क्या गात्रसेवक को नहीं देख रहे हो ? क्या कह रहे हो—वह गात्रसेवक शराब बेचनेवाली के घर में घुसकर शराब पी रहा है। चले जाओ। यह शराब बेचनेवाली का घर है। अब इसको पुकारता हूँ। ऐ गात्रसेवक ! ऐ गात्रसेवक !

( नेपथ्ये )

को दाणिं एसो एत्थ राअमग्गे 'गत्तसेवअ ! गत्तसेवअ ! त्ति मं सद्दावेदि। [ क इदानीमेषोऽत्र राजमार्गे गात्रसेवक ! गात्रसेवकेति मां शब्दापयति । ]

भटः—एसो गत्तसेवओ सुरं पिबिअ पिबिअ हसिअ हसिअ मदिअ मदिअ जवापुप्फं विअ रत्तलोअणो इदो एव्व आअच्छदि। एदस्स पुरदो ण चिट्ठिस्सं। [ एष गात्रसेवकः सुरां पीत्वा पीत्वा हसित्वा हसित्वा मदित्वा मदित्वा जपापुष्पमिव रक्तलोचन इत एवागच्छति। एतस्य पुरतो न स्थास्यामि। ] ( निवृत्य स्थितः। )

( ततः प्रविशति यथानिर्दिष्टो गात्रसेवकः )

गात्रसेवकः—को दाणिं एसो एत्थ राअमग्गे गत्तसेवअ ! यत्तसेवअ ! त्ति मं सद्दावेदि। पाणागारादो णिक्कन्तो दिट्ठ म्हि मम सुसुरेण सुरुट्ठेण। अमुदअमलअएण घिदमरिअलोणरूशिदे मंशखण्डे मुहे पक्खित्तो अ। णुसा रज्जइ पीदा जइ। अत्ता णं दण्डुज्जुआ होइ।

---

इदानीं=साम्प्रतम्, शब्दापयति = आह्वयति। रक्ते लोचने यस्य स रक्तलोचनः=लोहितनयनः।

---

( नेपथ्य में )

कौन है ? जो मुझे इस समय सड़क पर 'गात्रसेवक, गात्रसेवक' कहकर बुला रहा है ?

भट—यह गात्रसेवक मद्यपान करके हँसता हुआ मदोन्मत्त बनकर जपा पुष्प की तरह लाल-लाल आँखे करके इस ओर ही आ रहा है। मैं इसके समक्ष खड़ा न रहूँगा। ( घूमकर बैठ जाता है। )

( तदनन्तर यथानिर्दिष्ट वेष में गात्रसेवक प्रवेश करता है। )

गात्रसेवक—इस समय सड़क पर कौन मुझे 'गात्रसेवक, गात्रसेवक' कहके पुकार रहा है। मधुशाला से निकलता हुआ मैं क्रोधी श्वसुर के द्वारा देख लिया गया हूँ। सुधातुल्य शराब के साथ मैंने भी घी मरिच और नमक

धण्णा सुराहि मत्ता धण्णा सुराहि अणुलित्ता।
धण्णा सुराहि ण्हादा धण्णा सुरारि संअविदा ॥ १ ॥

अधण्णा अत्तणो पुत्तदाराणं कट्ठं पिट्ठं सुणन्ता जे मूढा णरा सुसमिद्धा सुरातटाअं ण जोजअन्ति। ता जाणे जमलोऐ वा णरअं अत्थि ण त्थि अ। [ क इदानीमेषोऽत्र राजमार्गे गात्रसेवक ! गात्रसेवक ! इति मां शब्दापयति। पानागारान्निष्क्रान्तो दृष्टोऽस्मि मम श्वशुरेण सुरुष्टेन। अमृतमल्लकेन घृतमरिचलवणरूषितो मांसखण्डो मुखे प्रक्षिप्तश्च। स्नुषा रज्यति पीता यदि। श्वश्रूर्ननु दण्डोद्यता भवति।

धन्याः सुराभिर्मत्ता धन्याः सुराभिरनुलिप्ताः।
धन्याः सुराभिः स्नाता धन्याः सुराभि संज्ञापिताः ॥ १ ॥

---

पानागारात् = मद्यशालातः, सुरुष्टेन = सुष्ठुकोपितेन, अमृतमल्लकेन= अमृतमिव माधुर्याधिक्यात् मद्यं तत्पूर्णेन मल्लकेन पात्रेण सह, स्नुषा=आत्मजवधूः, पीता = विहितमद्यमाना सती, रज्यति = श्वसुरे रागवती भवति, गम्यागम्यपुरुषविवेकस्य मधुमदेन निमीलनादित्याशयः, सुरास्वादनं विधाय मद्यपायी मानवो गम्यागम्यविवेकरहितो भवतीति भावः। श्वश्रूः=पतिजननी, दण्डाय उद्यता दण्डोद्यता = श्वसुरकामां स्नुषां दमयितुमुद्यतदण्डा भवति।

अन्वयः—सुराभिः मत्ताः धन्याः, सुराभिः अनुलिप्ताः धन्याः, सुराभिः स्नाता धन्याः, सुराभिः संज्ञापिताः धन्याः।

व्याख्या—सुराभिः = मदिराभिः, मत्ताः = चैतन्यरहिताः, धन्याः = श्लाघ्याः, सुराभिः = मदिराभिः, अनुलिप्ताः = मदिरानुलिप्ताः, धन्याः = प्रशंसनीयाः, सुराभिः = मदिराभिः, स्नाताः = विहिताभिषेकाः, धन्याः = प्रशंसार्हाः, सुराभिः = मदिराभिः, संज्ञापिताः = अतिपानवशान्मारिताः, पञ्चत्वङ्गता इत्याशयः, धन्याः=सम्मान्याः, सन्तीति शेषः ॥ १ ॥

---

घि छौंके हुए मांसखण्डों को मुँह में डाल लिया है। शराब पीकर पुत्रवधू भी ससुर से प्रेम करने लगती है ? तब सास पतोहू को दण्ड देने के वास्ते तैयार हो जाती है।

शराब पीकर जो मत्त हो जाते हैं, वे धन्य हैं। मद्य से अनुलिप्त पुरुष

अधन्या आत्मनः पुत्रदाराणां कष्टं पिष्टं शृण्वन्तो ये मूढा नराः सुसमृद्धाः सुरातटाकं न योजयन्ति । ततो जाने यमलोके वा नरकोऽस्ति नास्ति च । ]

भटः—(उपसृत्य) भो गत्तसेवअ ! को कालो तुमं अण्णेसामि। भट्टिवारिआए वासवदत्ताए उदए कीलिदुकामाए भद्दवदी ण दिस्सदि। तुमं दाव मत्तो एत्थ आहिण्डसि। [भो गात्रसेवक ! कः कालस्त्वामन्विष्यामि। भर्तृदारिकाया वासवदत्ताया उदके क्रीडितुकामाया भद्रवती न दृश्यते। त्वं तावन्मत्तोऽत्राहिण्डसे। ]

---

ये मूढाः = विवेकरहिताः नराः = मानवाः, सुसमृद्धाः = ऐश्वर्यशालिनः (सन्तोऽपि) आत्मनः = स्वस्य, पुत्रदाराणां कष्टं पिष्टं शृण्वन्तः = स्त्रीपुत्राणां दुःखमनवरतं समाकर्णयन्तः, सुरायाः, तटाकम् सुरातटाकं = मदिरासरसं, न योजयन्ति = नोत्पादयन्ति, अथवा न निमज्जन्ति, ते = तादृशाः जनाः, अधन्याः = भागधेयरहिताः, सन्तीति शेषः । नरकः = कष्टम् ।

भो गात्रसेवक ! इति सम्बोधनम्, कः कालः = कियान् समयो व्यतीतः, त्वाम् = भवन्तम्, अन्विष्यामि = मृग्यामि, भर्तृदारिकायाः = राजकुमार्याः, उदके = जले, भद्रवती = वासवदत्तायाः हस्तिनी, न दृश्यते = नावलोक्यते । अत्र = अस्मिन् स्थाने, आहिण्डसे = परिभ्रमसि ।

---

भी धन्य हैं । शराब के द्वारा स्नान किये हुए लोग भी धन्य हैं और जो शराब पीकर मर जाते हैं, वे भी धन्य हैं ।। १ ।।

जो मूर्ख धनाढ्यजन स्त्री-पुत्र के प्रतिदिन के कष्ट को सुनते हुए शराब रूपी तालाब में स्नान नहीं करते, वे भाग्यहीन हैं । पुत्र-कलत्र के पालन-पोषण के अतिरिक्त यमलोक में और कोई अन्य दुःख है या नहीं, इसमें सन्देह है ।

भट—( पास जाकर ) ऐ गात्रसेवक ! कब से तुम्हें खोज रहा हूँ । राजकुमारी वासवदत्ता जल क्रीडा करना चाहती है, किन्तु उसकी हथिनी भद्रवती नहीं दिखाई दे रही है और तुम शराब पीने से मत्त होकर यहाँ घूम रहे हो ।

गात्रसेवक:—जुज्जइ। सा अ ण मत्ता, सो पुरुषो वि मत्तो, अहं वि मत्तो, तुमं वि मत्तो, सव्वं मत्तसमं होइ। [युज्यते। सा च ननु मत्ता, स पुरुषोऽपि मत्तोऽहमपि मत्त:, त्वमपि मत्त:, सर्वं मत्तसमं भवति।]

भट:—सव्वं दाव चिट्ठदु। राअउले भद्दपीठिअं णणिक्कमिअ कुदो अअं आहिण्डदि त्ति। [सर्वं तावत् तिष्ठतु। राजकुले भद्रपीठिकां न निष्क्राम्य कुतोऽयमाहिण्डत इति।]

गात्रसेवक:—इदो आहिण्डामि, एत्थ पिबामि, एदेण पिबामि, मा संरम्भेण किं करीअदु। [इत आहिण्डे, अत्र पिबामि, एतेन पिबामि, मा संरम्भेण। किं क्रियताम्?]

भट:—हिज्जउ असम्बन्धप्पलावो। सिग्घं भद्दवदिं पवेसेहि। [भवत्वसम्बन्धप्रलाप:। शीघ्रं भद्रवतीं प्रवेशय।]

गात्रसेवक:—पविसदु पविसदु भद्दवदी। अंघो मए भद्दवदीए अंकुसं आढत्तं। [प्रविशतु प्रविशतु भद्रवती। अङ्घो मया भद्रवत्या अङ्कुशमाहितम्?]

---

सा = हस्तिनी भद्रवती।

राजकुले = राजभवनसमीपे, भद्रपीठिकां = तद्धस्तिनीम्, न निष्क्राम्य=प्रवेशमकारयित्वा।

इत आहिण्डे=अत्र परिभ्रमामि, मा संरम्भेण=कोपेन अलम्।

प्रविशतु प्रविशतु=प्रवेशं विदधातु स्वयमेव भद्रवती, नाऽहं तां प्रवेश-

---

गात्र०—ठीक है, वह भी मस्त है, वह पुरुष भी मस्त है। मैं भी नशे में हूँ। तुम भी मदोन्मस्त हो। सभी नशे में चूर-से हो रहे है।

भट—यह सब बस करो। राजकुल में भद्रवती को न ले जाकर तुम यहाँ क्यों घूम रहे हो?

गात्र०—यहाँ भ्रमण करता हूँ। यहाँ पान करता हूँ। इसके साथ शराब पीता हूँ। कोप मत करो। क्या करूँ?

भट—व्यर्थ की बातें बन्द करो। शीघ्रता से भद्रवती को ले आओ।

गात्र०—भद्रवती! प्रवेश करो, प्रवेश करो। अरे! मैंने तो भद्रवती के अंकुश को रेहन रख दिया है।

भटः—सभावविणीदाए भद्दवदीए अङ्कुसेण किं कय्यं ? गच्छ, सिग्घं भद्दवदिं पवेसेहि। [ स्वभावविनीताया भद्रवत्या अङ्कुशेन किं कार्यम् ? गच्छ, शीघ्रं भद्रवतीं प्रवेशय। ]

गात्रसेवकः—पविसदु पविसदु भद्दवदी। अंघो मए भद्दवदीये खुरप्पमाला आढत्ता। [ प्रविशतु प्रविशतु भद्रवती। अङ्घो मया भद्रवत्याः क्षुरप्रमालाऽऽहिता।

भटः—पुप्फबन्धिआए भद्दवदीए खुरप्पमालाए किं कय्यं ? सिग्घं भद्दवदिं पवेसेहि। [ पुष्पबन्ध्याया भद्रवत्याः क्षुरप्रमालया किं कार्यम् ? शीघ्रं भद्रवतीं प्रवेशय।

गात्रसेवकः—पविसदु पविसदु भद्दवदी। अंघो मऐ भद्दवदी एघण्टा आढत्ता ! [ प्रविशतु प्रविशतु भद्रवती। अङ्घो मया भद्रवत्या घण्टाहिता।]

भटः—उदए कीलिदुकामाए भद्दवदीए घण्टाए किं कय्यं ? सिग्घं

---

यामि, यतो हि मया तस्याः सर्वमङ्कुशादिकं मद्यविक्रयिण्याः हस्ते आधीकृतम्, 'गिरवी' इति रूपेण संस्थापितम्, अथवा बन्धकीकृतम्, एतावता अंकुशादिविरहितां भद्रवतीं कथं प्रवेशयामीत्याशयः। अंघो=इति भयसूचकः शब्दः, क्षुरप्रमाला=अर्धचन्द्रमाला, आहिता=आधीकृता।

पुष्पबन्ध्यायाः = पुष्पेण बन्धुं वशीकर्तुं योग्यायाः।

---

भट—भद्रवती स्वभाव से ही विनीत है। उसे अंकुश से क्या प्रयोजन ? जाओ, भद्रवती को शीघ्र ले आओ।

गात्र०—भद्रवती ! प्रवेश करो प्रवेश करो। अरे ! मैंने तो भद्रवती की अर्धचन्द्रमाला भी बन्धक रख दी है।

भट—फूलों से बाँधी जा सकने वाली भद्रवती को अर्द्धचन्द्रमाला से क्या मतलब ! शीघ्र उसे प्रविष्ट कराओ।

गात्र—भद्रवती ! प्रवेश करो, प्रवेश करो। अरे ! मैंने भद्रवती का घण्टा भी बन्धक रख दिया है

भट—जल क्रीडा करने की इच्छुक भद्रवती को घण्टे से क्या प्रयोजन ? भद्रवती को शीघ्र प्रवेश कराओ।

भद्दवदि पवेसेहि। [ उदके क्रीडितुकामाया भद्रवत्या घण्टया किं कार्यम् ? शीघ्रं भद्रवतीं प्रवेशय।

गात्रसेवकः—पविसदु पविसदु भद्दवती। अंधो मए भद्दवदीए कसिअं आढत्तं। [ प्रविशतु प्रविशतु भद्रवती अङ्घ्रो मया भद्रवत्याः कशिका आहिता। ]

भटः—कसिएण किं कय्यं ? सिग्घं भद्दवदि पवेसेहि। [ कशिकया किं कार्यम् ? शीघ्रं भद्रवतीं प्रवेशय। ]

गात्रसेवकः—पविसदु पविसदु भद्दवदी। अंधो। [ प्रविशतु प्रविशतु भद्रवती। अङ्घ्रो। ]

भटः—किं अंधो ? [ किम् अङ्घ्रो ? ]

गात्रसेवकः—अंधो भए। [ अङ्घ्रो मया ? ]

भटः—किं तुए। [ किं त्वया ? ]

गात्रसेवकः—अंधो भद्द। [ अङ्घ्रो भद्र। ]

भटः—किं भद्दत्ति। [ किं भद्रेति ]

गात्रसेवकः—अङ्घ्रो भद्दवदी। [ अङ्घ्रो भद्रवती। ]

भटः—किं भद्दवदी [ किं भद्रवती ? ]

---

गात्र०—भद्रवती ! प्रवेश करो, प्रवेश करो। अरे ! मैंने तो भद्रवती की कशा ( कोड़ा या चाबुक ) भी बन्धक रख दिया है।

भट—कोड़े की आवश्यकता नहीं है। शीघ्र ही भद्रवती को ले आओ।

गात्र०—भद्रवती प्रवेश करो, प्रवेश करो। अरे ?

भट—अरे क्या ?

गात्र०—अरे मैंने !

भट—तुमने क्या ?

गात्र०—अरे भद्र !

भट—भद्र क्या ?

गात्र०—अरे भद्रवती ?

भट—भद्रवती क्या ?

गात्रसेवकः—भद्दवदी पि आढता। [ भद्रवत्यप्याहिता।

भटः—ण तुवं एत्थ अवरज्झो। कण्डिलसुण्डिकिणी खु अवरज्झा जा राअवाहणं गण्हिअ सुरं देदि। [ न त्वमत्रापराद्धः। कण्डिलशौण्डिकी खल्वपराद्धा, या राजवाहनं गृहीत्वा सुरां ददाति।

गात्रसेवकः—अज्जो मए उत्तं—मा मूलविद्धिं विणासेहि त्ति। [ अज्जो मयोक्तम्—मा मूलवृद्धिं विनाशयेति। ]

भटः—हं सद्दो विअ। [ हं शब्द इव। ]

गात्रसेवकः—अंघो जाणामि जाणामि, कण्डिलसुण्डिकिणीए गहं भिन्दिअ भद्दवदी पलाअदि। [ अज्जो जानामि जानामि, कण्डिशौण्डिक्या गेहं भित्त्वा भद्रवती पलायते।

भटः—किं भणासि ? ( आकाशे ) एसो भट्टा वच्छराओ वासवदत्तं गण्हिअ णिग्गदो त्ति। [ किं भणसि ? एष भर्ता वत्सराजो वासवदत्तां गृहीत्वा निर्गत इति। ]

---

उक्तं = निगदितम्, कण्डिलशौण्डिक्याः—इत्याशयः। मूलवृद्धिं मा विनाशय = संस्थितायां मूलधनस्थानीयायां भद्रवत्यां, तत्परिचरणभृतिभाजो मम सकाशात् किमपि मद्यमूल्यं दिने दिने वृद्धिस्थानीयं ते सुलभं भवेत्, तदेतद् मूलनाशनेन मा नाशयेत्याशयः।

पलायते = परिधावति।

---

गात्र०—भद्रवती को भी मैंने बन्धक रख दिया है।

भट—इसमें तेरा अपराध नहीं है। शराब वेचनेवाली का अपराध है, जो राजा की सवारी को लेकर शराब देती है

गात्र०—अरे ! मैंने उससे कहा था कि मूलवृद्धि का नाश न करो।

भट—कुछ आवाज हो रही है।

गात्र०—अरे ! जानता हूँ, जानता हूँ। शराब बेचनेवाली के घर को तोड़कर भद्रवती भाग रही है।

भट—क्या कहते हो ? ( आकाश की ओर देखकर ) स्वामी वत्सराज वासवदत्ता को लेकर भाग गये।

गात्रसेवकः—(सहर्षम्) अविघ्नमस्तु स्वामिनः ।

भटः—पिब पिब । अज्ज वि तुमं मत्तो आहिण्डेहि [ पिब पिब । अद्यापि त्वं मत्त आहिण्डस्व । ]

गात्रसेवकः—आः को मत्तः, कस्य वा मदः, वयं खल्वार्ययौगन्धरायणेन स्वेषु स्वेषु स्थानेषु स्थापिताश्चारपुरुषाः । यावदहमपि सुहृज्जनस्य संज्ञां करोमि । एते ते सुहृदो निरोधमुक्ता इव कृष्णसर्पा इतस्ततो निर्धावन्ति । भोः भोः सुहृदः ! शृण्वन्तु भवन्तः—

नवं शरावं सलिलैः सुपूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम् ।
तत्तस्य मा भून्नरकं स गच्छेद् यो भर्तृपिण्डस्य कृते न युध्येत् ॥२॥

---

सहर्षं = हर्षपूर्वकम् , अविघ्नम्—मङ्गलम् , स्वामिनः=उदयनस्य । स्वेषु=स्वेषु ,स्थानेषु=भिन्नभिन्नस्थानेषु, स्थापिता=नियुक्ताः, चारपुरुषाः= गुप्तचराः । सुहृज्जनस्य-स्वमित्रवृन्दस्य, संज्ञां=संकेतं, करोमि = विदधामि । निरोधात् बन्धनात् मुक्ताः निर्गता इति निरोधमुक्ताः = बन्धनविनिर्गताः, कृष्णाश्च ते सर्पाश्च इति कृष्णसर्पाः = कृष्णभुजङ्गाः, इव = यथा ।

अन्वयः—यः भर्तृपिण्डस्य कृते न युध्येत् , तस्य सलिलैः सुपूर्णं सुसंस्कृतं दर्भकृतोत्तरीयं तत् नवं शरावं मा भूत् , सः नरकं गच्छेत् ।

व्याख्या—यः = अनुचरः, भर्तृपिण्डस्य कृते=भुक्तस्य स्वामिनोऽन्नस्यार्थे , न = नहि, युध्येत् = रणं कुर्यात् , तस्य = तथाविधस्य कृतघ्नस्य

---

गात्र०—( खुशी से ) स्वामी का कल्याण हो अर्थात् स्वामी का कार्य निर्विघ्न समाप्त हो ।

भट—पीओ, पीओ । आज भी तुम मस्त होकर भ्रमण करो ।

गात्र०—कौन नशे में है । किसको नशा हुआ है ? हमलोग तो गुप्तचर हैं, जिनको आर्य यौगन्धरायण ने अपने-अपने भिन्न-भिन्न स्थान पर नियुक्त किया है । मैं भी अपने मित्रों को इशारा करता हूं ये वे ही मित्र लोग हैं, जो कि बंधन से मुक्त हुए काले सांप के समान इधर-उधर दौड़ रहे हैं । ऐ मित्रों ! आपलोग सुनें, सुनें ।

जो स्वामी के खाये हुए अन्न का बदला चुकाने के लिये युद्ध न करे,

क्व नु खल्वार्ययौगन्धरायणः ? ( विलोक्य ) अये अयमत्रभवान् आर्ययौगन्धरायणः ! य एषः,

निशितविमलखड्गः संहृतोन्मत्तवेषः
कनकरचितचर्मव्यग्रवामाग्रहस्तः ।
विरचितबहुचीरः पाण्डराबद्धपट्टः
सतडिदिव पयोदः किञ्चिदुद्गीर्णचन्द्रः ॥ ३ ॥

---

जनस्य, सलिलैः = वारिभिः, सुपूर्ण=सुपरिपूरितं, सुसंस्कृतं = आभ्युदयिकैः मन्त्रैरभिमन्त्रितं, दर्भकृतोत्तरीयं = कुशपरिवेष्टितं, तत्=प्रथितं, नवं=नूतनं, शरावं=पात्रविशेषः, मा भूत् = न स्यात्, योद्धृतमात्रलभ्यत्वादिति भावः, सः=कृतघ्नोजनः, नरकं = यमयातनां, गच्छेत् = प्राप्नुयात्। उपेन्द्रवज्रा इन्द्रवज्रयोः सम्मिश्रणादुपजातिवृत्तम्। तल्लक्षणं यथा—'स्यादिन्द्रवज्रा यदि तौ जगौग.' 'उपेन्द्रवज्रा प्रथमे लघौ सा' अनन्तरोदीरितलक्ष्मभाजौ, पादौ यदीयावुपजातयस्ताः। इत्थं किलान्यास्वपि मिश्रितासु, वदन्ति जातिष्विदमेव नाम ॥ इति ॥ २ ॥

अन्वयः—निशितविमलखड्गः संहृतोन्मत्तवेषः कनकरचितचर्मव्यग्रवामाग्रहस्तः विरचितबहुचीरः पाण्डराबद्धपट्टः सतडित् किञ्चित् उद्गीर्णचन्द्रः पयोदः इव (भवतीति शेषः)।

व्याख्या—निशितः विमलः खड्गो यस्य सः निशितविमलखड्गः = तीक्ष्णस्वच्छकृपाणः, संहृतः उन्मत्तवेषो येन सः संहृतोन्मत्तवेषः=त्यक्तोन्म-

---

उसे जल से पूर्ण, भली भाँति संस्कृत और कुश से परिवेष्टित नूतन शराब ( सकोरा ) प्राप्त न हो और वह नरक में पड़े ॥ २ ॥

आर्य यौगन्धरायण कहाँ है ? ( देखकर ) अरे ! यौगन्धरायण तो यह हैं। जो यह—

तेज और चमकती तलवार धारण किये हुए, पागलों का वेष छोड़कर, गोवे से सुसज्जित ढाल में बायाँ हाथ डाले हुए, अनेक वस्त्रों को धारण किये हुए, सफेद पगड़ी बाँधे हुए, बिजली युक्त बादल की तरह जिसमें थोड़ा-थोड़ा चन्द्रमा दिखाई पड़ता है यह यौगन्धरायण है ॥ ३ ॥

अहो महत् प्रवृत्तं युद्धम् ।

हत्वा गजान् सगजिनः सहयांश्च योधा-
नक्षौहिणीमतिविगाह्य बलान्मुहूर्तम् ।
नागेन्द्रदन्तमुसलाहतभग्नबाहु-
र्भ्रष्टायुधोऽपि न निवृत्तपदोऽभियातः ॥ ४ ॥

---

त्ताकृतिः, कनकरचिते चर्मणि व्यग्रः वामः अग्रहस्तः यस्य सः कनकरचित-चर्मव्यग्रवामाग्रहस्तः = स्वर्णनिर्मितशस्त्रप्रहारनिवारणायुधविशेषव्यापृतदक्षिणेतराग्रकरः, विरचितानि बहूनि चीराणि येन सः विरचितबहुचीरः = शरीरविन्यस्तप्रभूतवसनः, पाण्डरः आबद्धः पट्टो येन सः पाण्डराबद्धपट्टः = धवलशिरोवेष्टनसमन्वितः, सतडित् = सविद्युत्, किञ्चिदुद्गीर्णचन्द्रः = ईषदुदितेन्दुः, पयोदः = जलदः, इव = यथा, भवतीति शेषः । मालिनी नाम वृत्तम् 'ननमयययुतेयं मालिनी योगिलोकैः' इति लक्षणात् ॥ ३ ॥

अन्वयः—सगजिनः गजान् हत्वा, सहयान् योधान् ( हत्वा ) बलात् मुहूर्तम् अक्षौहिणीम् अतिविगाह्य नागेन्द्रदन्तमुसलाहतभग्नबाहुः भ्रष्टायुधोऽपि न निवृत्तपदः अभियातः ।

व्याख्या—सगजिनः=आरोहीयुतान्, गजान् = वारणान्, हत्वा = व्यापाद्य, सहयान् = अश्वसहितान्, योधान् = भटान्, ( हत्वा = मारयित्वा) बलात्=बलपूर्वकम्, मुहूर्तम्=क्षणमात्रावधौ, अक्षौहिणीम् 'अक्षौहिणी' संख्यकान् रिपुसैन्यान्, अतिविगाह्य=छिन्न-भिन्नां विधाय, नागेन्द्रस्य दन्तमुसलेन आहतः (अतएव) भग्नः बाहुः यस्य सः नागेन्द्रदन्तमुसलाहत-भग्नबाहुः=गजराजमुसलसमदन्ताभिहतसन्धिरहितभुजः, भ्रष्टम् आयुध यस्य सः भ्रष्टायुधः अपि = हस्तच्युतप्रहरणोऽपि, न निवृत्तपदः = न पृष्ठदेशाभिगतः (परन्तु) अभियातः = रिपुसमक्षं गतः । वसन्ततिलकं नाम वृत्तम् 'ज्ञेयं वसन्ततिलकं तभजा जगौगः' इति लक्षणात् ॥ ४ ॥

---

अरे ! यह तो भयंकर युद्ध प्रारम्भ हो गया ।

सवारों समेत गजों को योधाओं सहित घोड़ों को मारकर मुहूर्त भर में अपनी शक्ति से अक्षौहिणी सेना को तितर-बितरकर मूसल के समान हाथी के दांत से चोट खाकर हाथ के टूट जाने पर और हथियार के गिर जाने पर इसने पैर पीछे न हटाया, किन्तु शत्रु के समक्ष युद्ध करने को गया ॥४॥

हा धिग्, ग्रहणमुपगतः खल्वार्ययौगन्धरायणः !! यावदहमप्यार्ययौगन्धरायणस्य प्रत्यन्तरीभविष्यामि । ( निष्क्रान्तः )

भटः—कि णु खु एवं पाआरतोरणवज्जं सव्वं कोसम्बी खु इदं । होदु इमं वुत्तन्तं अमच्चस्स णिवेदेमि । [ किन्तु खल्वेतत् । प्राकारतोरणवर्जं सर्वं कौशाम्बी खल्विदम् । भवत्विमं वृत्तान्तममात्याय निवेदयामि ।]
( निष्क्रान्तः । )

इति प्रवेशकः ।

( ततः प्रविशतः साधारणौ । )

उभौ—उस्सरह उस्सरह अय्या ! उस्सरह । [ उत्सरतोत्सरतार्याः ! उत्सरत । ]

प्रथमः—अंघो कण्ठस्स दीअमाणस्स ण उच्चं विरमदि । [ उङ्घो कण्ठस्य दीयमाणस्य नोच्चं विरमति । ]

---

हा धिग्—इति खेदे, ग्रहणमुपगतः = रिपुवक्षङ्गतः, प्रत्यन्तरीभविष्यामि = आसन्नो भविष्यामि ।

प्राकारतोरणवर्जं=प्राकारतोरणविरहितम् , कौशाम्बी = उदयनराजधानी ।

अंघो इति कष्टे, कण्ठस्य = गलस्य, दीयमाणस्य = उच्चारणायातिविहितप्रयासस्य, उच्चं = पथिमिलितपौरकलकलोच्चरवं, न = नहि, विरमति = प्रशाम्यति ।

---

हाय ! बड़े दुःख की बात है कि आर्य यौगन्धरायण पकड़े गये । मैं भी यौगन्धरायण के पास जाऊँगा । ( निकल जाता है । )

भट—यह क्या ? यह तो प्राकार और तोरण को छोड़कर सभी कौशाम्बी है । अच्छा, यह वृत्तान्त अमात्य से निवेदन करूँगा । ( निकल जाता है । )

॥ प्रवेशक समाप्त ॥

( तदनन्तर दो सामान्य भट प्रवेश करते हैं । )

दोनों—हटो, हटो, आर्य ! हटो ।

पहला—मैं गला फाड़-फाड़कर चिल्लाता हूँ, तब भी जन-कोलाहल बन्द नहीं हो रहा है ।

द्वितीयः—अंधो भट्टिदारिआए वासवदत्ताए अवणअणविब्भमदाए वरुवन्तस्स मे वअणं कोच्चि ण सुणादि । अंधो ! किं भणह–किण्णिमित्तं उस्सारणा वत्तदि त्ति । गहीदो अय्यजोअन्धराअणो । किं भत्तह–कहं गहीद त्ति । सुणन्तु अय्या । अय्यजोअन्धराअणेण असिदुदीएण अक्खोहिणीए अग्गवेगो मुहुत्तअं धारिदो । विजयसुन्दरस्स हत्थिजो दन्तन्तचोदिदो असी विवण्णो असिदोसेण गहीदो, ण पुरुसदोसेण । [ अंधो भर्तृदारिकाया वासवदत्ताया अपनयनविभ्रमतया विरुवतो मे वचनं कश्चिन्न शृणोति अङ्गो ! किं भणत-किन्निमित्तमुत्सारणा वर्तते इति । गृहीत आर्ययोगन्धरायणः । किं भणत—कथं गृहीत इति । शृण्वन्त्वार्याः–आर्ययौगन्धरायणेनासिद्वितीयेनाक्षौहिण्या अग्रवेगो मुहुर्तं धारितः । विजयसुन्दरस्य हस्तिनो दन्तान्तनोदितोऽसिर्विपन्नः । असिदोषेण गृहीतो, न पुरुषदोषेण । ]

---

भर्तृदारिकायाः=नृपात्मजायाः वासवदत्तायाः, अपनयनेन विभ्रमः यस्य तस्य भावस्तत्ता तया हेतुना इति अपनयनविभ्रमतया = अपहरणोन्मादहेतुना, मे = मम, विरुवतः = तारस्वरेण घोषं कुर्वतः असिः एव द्वितीयो यस्य सः असिद्वितीयः, तेन असिद्वितीयेन = कृपाणसहायकमात्रेण, अग्रवेगः = प्रथमप्रवाहः. प्रबलाक्रमणं वा, धारितः = सोढः, दन्तान्ते (यौगन्धरायणेन) चोदितः दन्तान्तचोदितः=दशनाग्रप्रहितः, असि=खड्गः, विपन्नः = भग्नः । असिदोषण = कृपाणत्रोटनरूपदोषेण, गृहीतः = अरिवशङ्गतः, न तु पुरुषदोषेण = कापुरुषत्वेन, न तु निर्वीर्यत्वादित्याशयः ।

---

दूसरा—अहा ! राजकुमारी वासवदता के हर लिये जाने से सब पागल हो रहे हैं, अतः मेरी बातों को कोई नहीं सुन रहा है । क्या कहते हो ? क्यों हटा रहे हो ! आर्य यौगन्धरायण पकड़े गये हैं । क्या कहते हो ? कैसे पकड़े गये ? आप लोग सुनें । आर्य यौगन्धरायण ने केवल तलवार से एक मुहूर्त तक अक्षौहिणी के वेग को सहन किया । विजय सुन्दर नामक हाथी के दांत में मारने से तलवार टूट गई । वह तो तलवार के दोष से अर्थात्-टूटने से पकड़े गये न कि अपने पुरुषार्थ की कमी से ।

प्रथमः—अंय्यो अप्पमत्ता होह तुम्हे। पाआरतोरणधज्जं सव्वं कोसम्बी खु इअं। [ अङ्गो अप्रमत्ता भवत यूयम्। प्राकारतोरणवर्जं कौशाम्बी खल्वियम्। ]

उभौ—ओदरदु ओदरदु अय्यो ओदरदु। [ अवतरत्ववतरत्वार्योऽवतरतु ! ]

( ततः प्रविशति यौगन्धरायणः बद्धबाहुः फलकशयनेनानीयमानः। )

यौग०—अयमनमवतरामि।

रिपुगतमपनीय वत्सराजं ग्रहणमुपेत्य रणे स्वशस्त्रदोषात्।
अयमहमनीतभर्तृदुःखो जितमिति राजकुले सुखं विशामि ॥५॥

---

अन्वयः—अयम् अहम् रिपुगतम् वत्सराजम् अपनीय, रणे स्वशस्त्रदोषात् ग्रहणम् उपेत्य अपनीतभर्तृदुःखः 'सन्' जितमिति राजकुले सुखं विशामि।

व्याख्या—अयम् = पुरःस्थितः, अहम् = यौगन्धरायणः, रिपुगतं = अरिहस्ताधिगतं, वत्सराजम् = उदयनम्, अपनीय = मोचयित्वा, अपहृत्येत्याशयः, रणे=संग्रामे, स्वशस्त्रदोषात् = निजप्रहरणभङ्गात्, ग्रहणम्= बन्धनम्, उपेत्य=समासाद्य, अपनीतम् भर्तुः दुःखं येन सः अपनीतभर्तृदुःखः= निवारितस्वामिक्लेशः, 'सन्' जितमिति='जयोऽधिगतः' इत्येवं मत्वा, राजकुले = नृपसदने, सुखं = सुखपूर्वकं, अथवा आनन्दं यथा स्यात्तथा, विशामि = प्रवेशं विदधामि। पुष्पिताग्रावृत्तम् 'अयुजि नयुगरेफतो यकारो, युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात् ॥ ५ ॥

---

पहला– अरे ! आप लोग सावधान हों। यह उज्जयिनी प्राकार और तोरण के बिना कौशाम्बी हो रही है।

दोनों—उतरिये, उतरिये, आर्य ! आप उतरिये।

( तदनन्तर बंधे हुए हाथों वाला, फलकशयन के द्वारा लाया हुआ यौगन्धरायण प्रवेश करता है। )

यौग०—यह मैं उतरता हूं।

शत्रु के वशीभूत वत्सराज को छुड़ाकर, युद्ध में अपने हथियार के टूटने के कारण पकड़ा हुआ मैं यौगन्धरायण स्वामी के दुःख को दूरकर और यह समझकर कि मेरी विजय पूरी हो गई है, राजकुल में प्रवेश कर रहा हूं ॥५॥

भोः ! सुखं खलु निष्कलत्राणां कान्तारप्रवेशः, रमणीयतरः खलु प्राप्तमनोरथानां विनिपातः, अपश्चात्तापकरः खलु सञ्चितधर्माणां मृत्युः । मया हि,

वैरं भयं परिभवं च समं विहाय
कृत्वा नयैश्च विनयैश्च शरैश्च कर्म ।
शत्रोः श्रियं च सुहृदामयशश्च हित्वा
प्राप्तो जयश्च नृपतिश्च महांश्च शब्दः ॥ ६ ॥

---

भोः ! इति सम्बोधनम् , निष्कलत्राणां = वनिताविरहितानां जनानां, कान्तारे प्रवेशः इति कान्तारप्रवेशः=अरण्याटनम् , खलु = निश्चयेन, सुख= आनन्दप्रदम् । प्राप्तः मनोरथः यैस्ते, तेषां प्राप्तमनोरथानाम् = अधिगताभिलषितानां, विनिपातः = दैविकीविपत्तिः, खलु-निश्चयेन, रमणीयतरः = मञ्जुलतरः । सञ्चितः धर्मो यैः ते, तेषां सञ्चितधर्माणां=समुपार्जितपुण्यानां, मृत्युः = प्राणवियोगः, खलु = निश्चयेन, अपश्चात्तापकरः = अशोचनीयः ।

अन्वयः—वैरं भयं परिभवं च समं विहाय नयैः विनयैः शरैः च कर्म कृत्वा शत्रोः श्रियं सुहृदाम् अयशः च हित्वा जयः प्राप्तः नृपतिः महान् शब्दः च प्राप्तः ।

व्याख्या—वैरं = विरोधं, भयं = साध्वसं, परिभवं = अपमानं च, समं=युगपदेव विहाय = परित्यज्य, नयैः = नीतिभिः, विनयैः = नम्रतादिभिर्गुणैः, शरैः = इषुभिश्च, कर्म = रणकार्यं, कृत्वा=सम्पाद्य, शत्रोः = रिपोः, श्रियं = राजलक्ष्मीम्, सुहृदाम् = मित्राणाम् , अयशः च = अपकीर्तिञ्च, हित्वा=त्याजयित्वा, जयः=विजयम् , प्राप्तः = अधिगतः, नृपतिः=

---

स्त्री-रहित जनों का वनगमन सुखदायक होता है । पूर्ण मनोरथवालों के लिये विपत्ति भी रमणीयतर होती है और जिन्होंने धर्म उपार्जन कर लिया है, उनके लिये मरना भी श्रेयस्कर है । मैंने तो—

न शत्रुता, भय और तिरस्कार—इन सबको एक साथ त्याग कर, नीति विनय और बाणों से कार्य सम्पादित कर तथा शत्रु की लक्ष्मी को

उभौ—उस्सरह उस्सरह अय्या ! उस्सरहे । [ उत्सरतोत्सरतार्याः उत्सरत । ]

यौग०—मद्दर्शनाभिलाषी जनो न कश्चिदुत्सारयितव्यः ।

पश्यन्तु मां नरपतेः पुरुषाः ससत्वा
राजानुरागनियमेन विपद्यमानम् ।
ये प्रार्थयन्ति च मनोभिरमात्यशब्दं
तेषां स्थिरीभवतु नश्यतु वाभिलाषः ॥ ७ ॥

---

वत्सराजः, महान् शब्दः च = 'महान्' इति सम्बोधनम् , प्राप्तः = अधिगतवान् । वसन्ततिलका नाम वृत्तम् 'उक्ता वसन्ततिलका तभजा जगौ गः' इति लक्षणात् ॥ ६ ॥

अन्वयः—राजानुरागनियमेन विपद्यमानं माम् ससत्त्वाः नरपतेः पुरुषाः पश्यन्तु, ये मनोभिः अमात्यशब्दं प्रार्थयन्ति तेषाम् अभिलाषः स्थिरीभवतु नश्यतु वा ।

व्याख्या—राज्ञि अनुरागः राजानुरागः, तस्य नियमेन इति राजानुरागनियमेन = स्वामिभक्तिव्रतेन, विपद्यमानं = आपद्ग्रस्तं, माम् = यौगन्धरायणं, ससत्त्वाः = धैर्यशालिनः, नरपतेः = प्रद्योतस्य, पुरुषाः = जनाः पश्यन्तु = अवलोकयन्तु, ये च = राजकर्मचारिणः, मनोभिः = हृदयैः, अमात्यशब्दं = 'अमात्य' इत्येवंरूपेण सम्बोधनम् , प्रार्थयन्ति = अभिलषन्ति, तेषां = पुरुषाणां, अभिलाषः = मनोरथः, स्थिरीभवतु = दृढीभवतु, नश्यतु=

---

और मित्रों की अपकीर्ति को हटाकर जय प्राप्त किया, राजा वत्सराज को पाया और 'महान्' शब्द को उपाधि प्राप्त करते हुए अपनी कीर्ति-पताका फहराई ॥ ६ ॥

दोनों—हटिये, हटिये, आर्य ! आपलोग हटिये ।

यौग०—मेरे दर्शन को इच्छुक किसी भी जन को हटाओ मत ।

राजा की भक्ति के कारण विपत्ति में पड़े हुए मुझको प्रद्योत के आदमी धैर्यपूर्वक देखें । जो लोग मन से अमात्य शब्द को चाहते हैं, उनकी अभिलाषा या तो पूरी ही होती है या तो नष्ट ही हो जाती है ॥ ७ ॥

उभौ—उस्सरह उस्सरह । किं तुम्हेहि ण विट्ठपुरुवो अय्यजो आन्धराअणो ! [ उत्सरतोत्सरत । किं युष्माभिर्न दृष्टपूर्व आर्ययौगन्धरायणः ? ]

यौग०—दृष्टः पूर्वं, न त्वेवम् । मम हि,

उन्मत्तच्छन्नवेषस्य रथ्यासु परिधावतः ।
अवगीतमिदं रूपं कर्म सम्प्रति दृश्यते ॥ ८ ॥

( प्रविश्य )

भटः—अय्य ! पिअं दे णिवेदेमि । गहीदो किल वच्छराओ । [ आर्य ! प्रियं ते निवेदयामि । गृहीतः किल वत्सराजः । ]

---

विनष्टो भवतु, वा=अथवा । मामवलोक्य ते जनाः स्वामिभक्तिनिश्चयेन पूर्णमनोरथाः सन्तु, अथवा मद्विपत्तिं प्रेक्ष्य भयभीताः सन्तोऽमात्याभिलाषामेव परित्यजन्तु—इत्याशयः । वसन्ततिलका नाम वृत्तम् 'उक्ता वसन्ततिलका तभजा जगौ ग' इति लक्षणात् ॥ ७ ॥

अन्वयः—उन्मत्तच्छन्नवेषस्य रथ्यासु परिधावतः ( मम ) इदं रूपम् अवगीतम् , सम्प्रति (मम) कर्म, दृश्यते ।

व्याख्या—उन्मत्तच्छन्नवेषस्य = प्रमत्ताच्छादितस्वरूपस्य, रथ्यासु = वीथिषु, परिधावतः = समन्ततः पलायमानस्य, ( मम = यौगन्धरायणस्य ) इदं = पुरोदृश्यमानं, रूपम् = स्वरूपम् , अवगीतम् = निन्दितम् , सम्प्रति = अधुना, (मम=यौगन्धरायणस्य) कर्म=स्वामिभक्तिसमन्वितं कार्यं, दृश्यते = अवलोक्यते । अनुष्टुब्वृत्तमत्र ॥ ८ ॥

---

दोनों—हटिये, हटिये । क्या आपलोगों ने इसके पूर्व आर्य यौगन्धरायण को नहीं देखा है ?

यौग०—पहले देखा है, पर इस तरह से नहीं । मेरा तो—

उन्मत्त का वेष धारण करने से मेरा असली रूप छिपा था और मैं गली-गली में इधर-उधर दौड़ता था । अतः इन लोगों ने मेरे निन्दित रूप को देखा है, पर अब ये लोग मेरे रमणीय कर्मों को देखें ॥ ८ ॥

( प्रवेश कर )

भट—हे आर्य ! प्रिय समाचार कहने आया हूँ । वत्सराज पकड़ा गया ।

यौग०—नैतदस्ति ।

चिरमरिनगरे निरोधमुक्तः स किल वनान्युपलभ्य भद्रवत्या ।
ग्रहणमुपगमिष्यति प्रयातो निमिषितमात्रगतेषु योजनेषु ॥९॥

भद्र ! कथं गृहीत इति श्रुतम् ?

भटः—अणुसारिअ णलागिरिणा गहीदो किल । [ अनुतार्य नलागिरिणा गृहीतः किल । ]

यौग०—अस्ति वाहनसामर्थ्यम् असमायुक्तस्तु सः ।

---

अन्वयः—चिरम् अरिनगरे निरोधमुक्तः सः भद्रवत्या वनानि उपलभ्य किल प्रयातः निमित्तमात्रगतेषु योजनेषु ग्रहणम् उपगमिष्यति ।

व्याख्या—चिरम्=बहुकालम्, अरिनगरे = रिपुपुरे, निरोधात् मुक्तः निरोधमुक्तः=बन्धनविमुक्तः=बन्धनविमुक्तः 'सन्' सः=उदयनः, भद्रवत्या = एतन्नासिकया हस्तिन्या, वनानि=विन्ध्यकाननानि, उपलभ्य = समासाद्य, किल=निश्चयेन, प्रयातः=विहितप्रस्थानः, निमित्तमात्रगतेषु=क्षणमात्रव्यतीतेषु, योजनेषु = क्रोशचतुष्टयेषु, ग्रहणम् = सम्प्राप्तिः, उपगमिष्यति = यास्यति ? अर्थात् सवत्सराजः कथङ्कारमप्यधिगन्तुं न शक्यत इति भावः । पुष्पिताग्रावृतम् 'अयुजि नयुगरेफतो यकारो, युजि न नजौ जगाश्च पुष्पिताग्रा' इति लक्षणात् ॥ ९ ॥

वाहनस्य = नलागिरेः हस्तिनः, सामर्थ्यं = भद्रवत्यनुधावनशक्तत्वम्, असमायुक्तस्तु = असम्यग्व्यापारितः असुष्ठुशिक्षितो वा ।

---

यौग०—ऐसी बात नहीं है अर्थात् यह सम्भव नहीं हो सकता ।

शत्रु के नगर में अनेक विघ्नों से बचकर भद्रवती हथिनी पर सवार हो वनों के बीच से गमन करता हुआ अनेक योजन एक क्षण मात्र में जाकर क्या वह पकड़ा जा सकता है ? अर्थात् कदापि नहीं ॥ ९ ॥

भद्र ! वह कैसे पकड़ा गया, यह क्या तुमने सुना है ?

भट—नलागिरि को उसके पीछे लगाकर पकड़ा ।

यौग०—क्या उसमें इतना सामर्थ्य है ? वह तो अच्छी तरह से शिक्षा भी प्राप्त नहीं किया है ?

गजस्याघोरणायुक्तो जवो भवति शिक्षया।
विमुक्तं वत्सराजेन क एनं वाहयिष्यति ॥ १० ॥

भटः—अय्य ! अमच्चो आह–आउहागारे चिट्ठदु किल अय्यो। पुरुषगुत्तो अअं देसो त्ति। [ आर्य ! अमात्य आह–आयुधागारे तिष्ठतु किलार्यः। पुरुषगुप्तोऽयं देश इति। ]

यौग०—अहो हास्यमभिधानम्।

अग्निं बद्ध्वा वत्सराजाभिधानं यस्मिन् काले सर्वतो रक्षितव्यम्।
तस्मिन् काले सुप्तमासीदमात्यैर्नीते रत्ने भाजने को निरोधः ॥११॥

---

अन्वयः—गजस्य जवः आघोरणायुक्तः भवति, शिक्षया विमुक्तम् एनं वत्सराजेन (सह) कः वाहयिष्यति।

व्याख्या—गजस्य = वारणस्य, जवः = वेगः, आघोरणेन आयुक्तः आघोरणायुक्तः=हस्तिपकोत्पादितः भवति, शिक्षया विमुक्तम् = शिक्षाविरहितम्, एनं = नलगिरिं गजं, वत्सराजेन = उदयनेन, ( सह = साकं ) कः = जनः, वाहयिष्यति = गमयिष्यति। न कोऽपीत्याशयः। अनुष्टुब्वृत्तमत्र ॥ १० ॥

अमात्यः = सचिवः, आह = कथितवान्, आयुधागारे = शस्त्रभवने, तिष्ठतु = निवसतु, किल = निश्चयेन, आर्यः = भवान्। पुरुषैः गुप्तः पुरुषगुप्तः = बाह्यपुरुषसुरक्षितः, अयं देशः = प्रदेशः, इति।

अन्वयः—वत्सराजाभिधानम् अग्निं बद्ध्वा यस्मिन् काले सर्वतो रक्षितव्यम्, तस्मिन् काले अमात्यैः सुप्तम् आसीत्, रत्ने नीते भाजने कः निरोधः ॥११॥

---

हाथी का वेग महावत से समुत्पन्न होता है। शिक्षाविहीन इस नलागिरि नामक गज को वत्सराज के साथ कौन भगा सकता है ? अर्थात् कोई नहीं ॥ १० ॥

भट—आर्य ! अमात्य ने कहा है कि आप आयुधागार में ठहरे। यह स्थान लोगों से गुप्त है अर्थात् सामान्य जनों का यहाँ आगमन नहीं हो सकता।

यौग०—अहो ! यह अत्यन्त हँसी की बात है।

वत्सराज रूपी अग्नि को बाँधकर जिस समय सब तरफ से रक्षा करनी

( परिक्रम्य )

भटः—इदं आउहागारं पविसदु अय्यो । [ इदमायुधागारम् । प्रविशत्वार्यः ]

( प्रविश्य )

भटः—अमच्चो आह—अवणीअदु बन्धणं त्ति ! [ अमात्य आह—अपनीयतां बन्धनमिति । ]

यौग०—अक्षीणं मां कुरु । व्यक्तं भरतरोहको मां द्रष्टुमिच्छति । अहमपि तावद् भरतरोहकं द्रष्टुमिच्छामि ।

मद्वाक्यैः परिखिद्यमानहृदयं रोषात् प्रमत्ताक्षरैः
प्रारब्धेषु नयच्छलेषु तुलितं तुल्याधिकारोज्झितम् ।

---

व्याख्या—वत्सराजाभिधानम् = वत्सराजाख्यम् , अग्नि = अनलम् , अर्थात् वैश्वानरसदृशमुदयनम् , बद्ध्वा = स्वायत्तीकृत्य, यस्मिन् काले = यदा, सर्वतः = परितः सचिवसमूहैः, रक्षितव्यं=गोप्यं, तस्मिन् काले = तदा, अमात्यैः=मन्त्रिवृन्दैः, सुप्तम् = निद्रितम् , आसीत् = अवर्तत, रत्ने=मणौ, नीते=अपहृते सति, भाजने = रत्नभाण्डे, कः निरोधः=का सुरक्षा ?। शालिनी नाम वृत्तम् 'मात्तौ गौ चेच्छालिनी वेदलोकैः' इति लक्षणात् ।।११।।

अक्षीणं=विश्रान्तं, व्यक्तं=नूनम् ।

अन्वयः—रोषात् प्रमत्ताक्षरैः मद्वाक्यैः परिखिद्यमानहृदयं नयच्छलेषु प्रारब्धेषु तुलितं तुल्याधिकारोज्झितं शास्त्रविनिश्चितैः सूक्तैः विरहितं

---

चाहिये थी, उस समय अमात्य-गण सो रहे थे । भला, रत्न के चोरी चले जाने पर केवल रिक्त पात्र की रक्षा करने से क्या लाभ ? ।। ११ ।।

( परिक्रमा करके )

भट—यह आयुधागार है । आर्य ! भीतर प्रवेश करें ।

( प्रवेश कर )

भट—अमात्य का कथन है कि बन्धन हटा दो ।

यौग०—मुझे विश्राम कराओ । भरतरोहक मुझसे अवश्य मिलना चाहते हैं । मैं भी भरतरोहक से भेंट करना चाहता हूं ।

क्रोध में कहे गये मेरे उद्धत वचनों से जिस भरतरोहक का हृदय

सूक्तैः शास्त्रविनिश्चितैर्विरहितं बुद्ध्याधिकं वञ्चितं
द्रष्टुं मल्लमपक्रियाविनिहतं व्रीलादिवाधोमुखम् ॥ १२ ॥

( ततः प्रविशति भरतरोहकः । )

भरतरोहकः—क्वासौ क्वासौ यौगन्धरायणः ?

अवसितनिजकार्यं वञ्चनैर्दुर्निरीक्षं
कथमिव परिभावे भर्तुरर्थे विपन्नम् ।

---

बुद्ध्याधिकं वञ्चितम् अपक्रियाविनिहतं मल्लम् इव व्रीलात् अधोमुखं द्रष्टुम् 'इच्छामि' ।

व्याख्या—रोषात् = स्वामिवञ्चननिमित्तात् कोपात्, प्रमत्ताक्षरैः = मर्यादाविरहितैः, मद्वाक्यैः = मद्वचनैः, परिखिद्यमानहृदयं = दोदूयमानमानसं, दुःखिनमित्याशयः, नयच्छलेषु = नीतिकपटेषु, प्रारब्धेषु = सम्प्रयुक्तेषु, मयेति शेषः, तुलितं = तुलाधृतं, तुल्याधिकारोज्झितं = मत्प्रयुक्तच्छलारम्भसमानारम्भन्यूनं, शास्त्रविनिश्चितैः = शास्त्रविनिर्णीतैः, सूक्तैः = शोभनैरुपदेशैः, विरहितं = हीनं, बुद्ध्याधिकं = धिया स्वापेक्षयाधिकं, वञ्चितं = छलितं, यथा तेनाऽहं वञ्चितः ततोऽधिकं स मयावञ्चित इत्याशयः, अपक्रियया विनिहतं अप्रक्रियाविनिहतं = प्रतिकारप्रतिहतारम्भं, मल्लं = शूरम्, इव = यथा, व्रीलात् = त्रपातः, अधोमुखं = अवनताननं, द्रष्टुं = प्रेक्षितुं, 'भरतरोहकम् इच्छामि' इति शेषः । शार्दूलविक्रीडितं नाम वृत्तम् 'सूर्याश्वैर्मसजस्ततः गुरवः शार्दूलविक्रीडितम्' इति लक्षणात् ॥ १२ ॥

अन्वयः—वञ्चनैः अवसितनिजकार्यं दुर्निरीक्षं भर्तुः अर्थे विपन्नं

---

दुःखित हो रहा है प्रारम्भ किये गये नीतिकपट में तौले जाने पर जो घटकर ही निकला, जो शास्त्रोक्त सदुपदेशों से विरहित है, और जो बुद्धि में मुझसे भी अधिक ठगा गया, सारे प्रयत्न निष्फल होने से अवनत मुखवाला शूर के समान है, उस भरतरोहक को मैं अवश्य देखना चाहता हूँ ॥ १२ ॥

( तदनन्तर भरतरोहक प्रवेश करता है । )

भरतरोहक—यौगन्धरायण कहाँ है, कहाँ है ?

वञ्चनाओं से जिसने अपना कार्य पूरा कर लिया हैं, लज्जा के कारण

चिरनवनतकार्यं चापि नियुंक्तमन्त्रं
भुजगमिव सरोषं धर्षितं चोच्छ्रितं च ॥ १३ ॥

भट:—अय्यजोअन्धराअणो अय्यं पडिवालअन्तो आउहागारे चिट्ठइ। [ आर्ययौगन्धरायण आर्यं प्रतिपालयन् आयुधागारे तिष्ठति । ]

भरतरोहक:—भवतु भवतु ।

---

चिरम् अवनतकार्यं नियुंक्तमन्त्रं सरोषं भुजगमिव धर्षितम् उच्छ्रितं च 'एनम्' कथम् इव परिभाषे ।

व्याख्या—वञ्चनै:=कपटै:, अवसितं निजकार्यं येन स तम् अवसित-निजकार्यं=सम्पादितस्वेप्सितं, दुर्निरीक्षं=व्रीडान्मया कष्टपूर्वकं द्रष्टुं योग्यं, भर्तु: अर्थे = स्वामिन: कार्यनिमित्तं, विपन्नं = आपद्ग्रस्तं, चिरं=वहु-कालपर्यन्तम् , अवनतं कार्यं यस्य स: अवनतकार्य:, तम् अवनतकार्यं= स्वा-मिव्यसनवशादधोगत्यधिगतं, चापि=तथापि नियुंक्तमन्त्रं=उच्चैर्गतिप्राप्त्यनु-कूलप्रयुक्तोपायं, सरोषं=कोपान्वितं, भुजगं=सर्पम् , इव=यथा, धर्षितं = ग्रहणपरिभूतं, चोच्छ्रितं = सिद्धकार्यत्वादुच्चै:शिरसं, (एनं = यौगन्धरायणं) कथमिव = केनप्रकारेण, परिभाषे = उपालभे । सर्वविधश्लाघनीयचरितोऽसौ उपालम्भं नार्हतीत्यभिप्राय: । मालिनी नाम वृत्तम् 'ननमयययुतेयं मालिनी भोगिलोकै:' इति लक्षणात् ॥ १३ ॥

---

जिसे मैं कठिनाई से देख सकता हूँ। जिसका कार्य बहुत दिनों तक अमात्य के प्रतिकूल था, जो अपने स्वामी के लिये विपत्ति में फँसा, पराजित होने पर जिसका मस्तक ऊँचा है, तिरस्कृत होने के कारण अपने फणों को उपर उठाये हुये, क्रोध से भरे हुए साँप के समान इस यौगन्धरायण को मैं किस प्रकार उपालम्भ (ताना) प्रदान कर सकता हूँ ॥ १३ ॥

भट—आर्य यौगन्धरायण शस्त्रागार में आपका इन्तजार कर रहे हैं ।

भरत०—अच्छा, अच्छा ।

मन्त्रित्वे वञ्चितो ह्येष सव्याजं नीलहस्तिना।
प्रत्यादेष्टुं स तद्वैरं मामिदानीं प्रतीक्षते ॥ १४॥

भटः—अय्य ! एसो अमच्चो। [ आर्य ! एषोऽमात्यः। ]

भरतरोहकः—( उपगम्य ) भो यौगन्धरायण !

यौगन्धरायणः—भोः !

भटः—अहो सरस्स गम्भीरदा ! अय्यस्य एकक्खरेण पूरिदो अयं देसो !! [ अहो स्वरस्य गम्भीरता ! आर्यस्यैकाक्षरेण पूरतोऽयं देशः !! ]

भरतरोहकः—( उपविश्य ) भोः ! यौगन्धरायण इत्यशरीराण्यक्षराणि श्रूयन्ते। दिष्टया भवान् दृश्यते।

यौगन्धरायणः—दिष्टया भवान् दृश्यन्त इति। पश्यतु भवान् माम्,

---

अन्वयः—मन्त्रित्वे हि एष सव्याजं नीलहस्तिना वञ्चितः स इदानीं तद्वैरं प्रत्यादेष्टुं माम् प्रतीक्षते।

व्याख्या—मन्त्रित्वे = सचिवस्य कार्यकाले, हि = निश्चयेन, एषः = यौगन्धरायणः, सव्याजं = कपटसहितं, नीलहस्तिना = नीलेन वारणेन, वञ्चितः = छलितः, स = यौगन्धरायणः, इदानीं = साम्प्रतं, तद्वैरं = मत्प्रयुक्तप्रतारणमूलकं विरोधं, प्रत्यादेष्टुं = दूरीकर्तुं, माम् = भरतरोहकं, प्रतीक्षते = प्रतीक्षां विदधाति। अनुष्टुब्वृत्तमत्र ॥ १४॥

---

कपट पूर्वक यह नीले हाथी से अपने मन्त्रित्व काल में ठगा गया, उसी वैर का बदला लेने के लिये वह इस समय मेरी प्रतीक्षा कर रहा है ॥ १४॥

भट—आर्य ! ये अमात्य हैं।

भरत०—(समीप जाकर) ऐ यौगन्धरायण !

यौग०—ऐ !

भट—अहो ! कैसा गम्भीर स्वर है ? आर्य के एक ही अक्षर से यह स्थान भर गया।

भरत०—(बैठकर) ऐ ! अभीतक 'यौगन्धरायण' ये शरीर विहित अक्षर ही सुने गये थे, पर भाग्य से आप भी दिखाई पड़ते हैं।



यौग०—भाग्य से आप दिखाई पड़ रहे हैं ? तो आप मुझे देखें—

एवं रुधिरदिग्धाङ्गं वैर नियममास्थितम् ।
गुरोरवर्जितं हत्वा शान्तं द्रौणिमिव स्थितम् ।। १५ ।।

भरतरोहकः— अहो छलेनागतगजारम्भस्यात्मसम्भावना !!

यौगन्धरायणः— किं छलेनेति । तत् पुनरिदानीं युक्तम् ।

या सा मल्लिकसालवृक्षरचिता नागाश्रिता वञ्चना
बद्धः सेवितवान् हि नो नरपतिर्बाहूपधानां क्षितिम् ।

---

अन्वयः—वैरं नियममास्थितं एवं रुधिरदिग्धाङ्गं गुरोः अवर्जितं हत्वा शान्तं द्रौणिम्, इव स्थितं ( माम् पश्यतु ) ।

व्याख्या—वीरस्यायं वैरः, तं वैरं = वीरसम्बन्धिनं, नियममास्थितं= समुदाचारमाश्रितं, एवं = अनेन प्रकारेण, रुधिरेण दिग्धम् अङ्गम् यस्य सः रुधिरदिग्धाङ्गः तं रुधिरदिग्धाङ्गं = शोणितव्याप्तशरीरं, गुरोः = पितुः द्रोणाचार्यस्य, अवर्जितं = अवर्जेतारं, हत्वा = व्यापाद्य, शान्तं = कोपरहितं, द्रोणस्यापत्यं पुमान् द्रौणिः, तं द्रौणिम् = अश्वत्थामानम्, इव = यथा, स्थितं = विद्यमानम्, ( माम् = यौगन्धरायणं, पश्यतु = अवलोकयतु ) । अनुष्टुब्वृत्तमत्र ।। १५ ।।

छलेन = कपटेन, आगतः गजारम्भः येन तस्य आगतगजारम्भस्य = सम्प्राप्तभद्रवत्याख्यहस्तिनीद्वारकवत्सराजहरणोद्यमस्य, आत्मसम्भावना= निजविषयकोदर्पः ।

अन्वयः—या सा मल्लिकसालवृक्षरचिता नागाश्रिता वञ्चनः ( तत्

---

खून से पूर्ण शरीर वाले, वीरों के नियमों को पालन करने वाले मुझे आप पिता द्रोणाचार्य को पराजित करने वाले धृष्टद्युम्न को मारकर शान्त हुए द्रौणी ( अश्वत्थामा ) के समान देखें ।। १५ ।।

भरत०—वञ्चनाकर गज द्वारा वत्सराज को भगाकर अपने को शूर समझते हो ? धिक्कार है ।

यौग०—छल की बात क्यों कर रहे हो ? तुम्हारा छल करना क्या उचित था ?

मल्लिका और सालवृक्ष की आड़ में जो नीले हाथी की रचना कर

राज्ञो वारणनिग्रहे परिचयाद् वीणाश्रिता वञ्चना ।
पूर्वं प्रस्तुतमेव यामि भवता नैवापराधो मम ॥ १६ ॥

भरतरोहकः—भो यौगन्धरायण ! यदग्निसाक्षिकं महासेनस्य दुहितरं शिष्यां प्रतिगृह्य अदत्तापनयनं कृतं, युक्तेयं भोस्तस्करप्रवृत्तिः?

---

छलं किं युक्तमिति ) बद्धः न नरपतिः बाहूपधानां क्षितिं सेवितवान्, हि राज्ञः वारणनिग्रहे परिचयात् वीणाश्रिता वञ्चना भवता पूर्वं प्रस्तुतमेव यामि, मम अपराधः नैव ।

व्याख्या—या सा=पूर्वविहिता, मल्लिकासालवृक्षरचिता = मल्लिकाभिधानस्य विटपविशेषस्यान्तराले निर्मिता, नागाश्रिता=नीलवारणसम्बद्धा, वञ्चना = प्रतारणा, ( तच्छलं किमुचितम् ? ) बद्धः = निगडितः, नः = अस्माकं, नरपतिः—वत्सराजोदयनः, बाहुरेव उपधानं यस्यां तां बाहूपधानां = भुजोपबर्हाम्, क्षितिं = महीं, सेवितवान् = अधिशयितवान्, हि=यतः, राज्ञः—उदयनस्य, वारणनिग्रहे = गजदमने, परिचयात् = कौशलात्, वीणाश्रिता = वीणापहरणनिमित्तिका, वञ्चना=छलं विहितमिति, वत्सराजस्य वारणवशीकरणचातुर्यं, वीणावादनकौशलञ्चासहमानाः भवन्तस्तस्य वीणादिकमपहृतवन्त इत्याशयः । ( इत्थं ) भवता, पूर्वं=प्रथमं, प्रस्तुतमेव=दर्शितमेव कपटं, यामि=अनुसरामि, मम—यौगन्धरायनस्य, अपराधः=आगः, नैव,—नास्त्येवेति भावः । शार्दूलविक्रीडितं नाम वृत्तम् ॥ १६ ॥

महासेनस्य=प्रद्योतस्य, दुहितरम्—आत्मजां, अग्निसाक्षिकम्—वह्नेः

---

कपट-प्रयोग किया गया, क्या वह उचित था ? हमारे स्वामी वत्सराज ने आपके द्वारा कैद किये जाने पर पृथ्वी के ऊपर हाथों की तकिया लगाकर शयन किया । गजों को अपने अधीन कर लेने की निपुणता को सहन न कर पाने के कारण हमारे राजा वत्सराज की वीणा को भी आपलोगों ने छीन लिया । मैं तो आपलोगों द्वारा पूर्व से प्रयोग किये गये छल का ही अनुसरण कर रहा हूँ । इसमें मेरा कोई कसूर नहीं है ॥ १६ ॥

भरत०—हे यौगन्धरायण ! तुम्हारे स्वामी वत्सराज ने महासेन की आत्मजा वासवदत्ता को अग्नि को साक्षी देकर अपनी शिष्या बनाया और

यौगन्धरायणः—मा मा भवानेवम् । विवाहः खल्वेष स्वामिनः।

भरतानां कुले जातो वत्सानामूर्जितः पतिः ।
अकृत्वा दारनिर्देशमुपदेशं करिष्यति ॥ १७ ॥

भरतरोहकः—अद्यापि महासेनेन प्रयुक्तसत्कारो वत्सराजः। तदिदानीं किं नावेक्षते ?

यौगन्धरायणः—मा मा भवानेवम् ।

---

साक्षित्वे, शिष्यां=शिष्यात्वेन, प्रतिगृह्य=अङ्गीकृत्य, अदत्तायाः अपनयनम् अदत्तापनयनं=अविवाहितापहरणम्, कृतं=विहितं भोः=इति सम्बोधनम्, इयं तस्करप्रवृत्तिः=अयं चौरवद्व्यवहारः, युक्ता=समुचिता ? किमिति प्रश्ने ।

अन्वयः—भरतानां कुले जातः वत्सानाम् ऊर्जितः पतिः दारनिर्देशम् अकृत्वा उपदेशं करिष्यति ?

व्याख्या—भरतानां=तदाख्यमहीपतीनां, कुले=वंशे, जातः=समुत्पन्नः, वत्सानाम्=वत्सदेशवासिनां, ऊर्जितः=शक्तिसम्पन्नः, पतिः=राजा, दारनिर्देशम्=पत्नीत्वोचितक्रियाम्, अकृत्वा=अननुष्ठीय, उपदेशं=शिक्षां, करिष्यति=विधास्यति, नाध्यापयिष्यतीति भावः । अनुष्टुब्वृत्तमत्र ॥ १७ ॥

वत्सराजस्य बन्धनमोचनं सत्कारार्थं नैवानुष्ठितं महासेनेनापितु स्वेप्सितसंसाधनायेत्याह—

---

फिर उस राजकुमारी का अपहरण कर लिया । क्या यह चौरवृत्ति उचित है ।

यौग०—ऐसा मत कहो, यह तो मेरे स्वामी का विवाह है ।

भरत कुल में समुत्पन्न बलवान् वत्सराज क्या किसी कन्या को बिना अपनी पत्नी बनाये हुए शिक्षा दे सकता है ? अर्थात् कदापि नहीं ॥ १७ ॥

भरत०—आज भी महासेन ने वत्सराज का जो सत्कार किया है, क्या वह उसे नहीं मालूम है ?

यौग०—ऐसा आप मत कहें—

यदस्य चाज्ञां कुरुते नलागिरिः स शिक्षितानां वचनेषु तिष्ठति ।
ततो विमुक्तः स्वशरीरलक्षणे यशः प्रदातुं सुहृदां च जीवितम् ॥१८॥

भरतरोहकः—यद्येवं नलागिरिग्रहणार्थं विमुक्तश्चेद्, न पुनर्बद्धस्ते स्वामी ।

यौगन्धरायणः—नेति पश्यत्युपक्रोशभयात् ।

---

अन्वयः—यत् नलागिरिः अस्य आज्ञां कुरुते, सःशिक्षितानां वचनेषु तिष्ठति, ततः स्वशरीरलक्षणे सुहृदां जीवितं यशः च प्रदातुं विमुक्तः ।

व्याख्या—यत् = यस्माद्धेतोः, नलागिरिः=एतन्नामको गजः अस्य= उदयनस्य, आज्ञां=आदेशं, कुरुते=मनुते, सः=प्रथितो नलागिरिः, शिक्षितानां= वारणवशीकरणविद्यावतां, वचनेषु=कथनेषु, तिष्ठति=तदादेशं पालयति, ततः=तस्माद्धेतोः, स्वशरीरलक्षणे=निजप्राणत्राणार्थं, सुहृदां=स्वबन्धुजनानां, जीवितं=जीवनं, यशः=कीर्तिञ्च, प्रदातुं=प्रदानाय विमुक्तः=स निगडान्मुक्तिमवाप, गजवशीकरणविद्यानिष्णातो वत्सराजः प्रमत्तं नलागिरिं वशं न नयेत्तर्हि महासेनसुहृदां गजदमनासामर्थ्यापवादप्रसरणात् कीर्तिहानिः, तद्भिया, नलागिरिमभिगच्छतां निजजनप्राणवियोगश्च, तदुभयं मा भूदित्येतावता स बन्धनान्मोचित इत्याशयः, वंशस्थविलं नाम वृत्तम् 'वदन्ति वंशस्थविलं जतौ जरौ, इति लक्षणात् ॥ १८ ॥

उपक्रोशभयात् = ससुदृज्जनस्यात्मनो रक्षितारं कृतघ्नोऽयं पुनर्बध्नातीति लोकापवादभीतेः ।

---

नलागिरी तो हमारे स्वामी वत्सराज की आज्ञा का पालन करता है, उसका कारण यह है कि वह गजवशीकरण विद्या के जानने वालों का आदेश मानता है अतः अपने शरीर की रक्षा हेतु और यश प्राप्त करने के निमित तथा अपने मित्रों की जान बचाने के लिये वत्सराज महासेन के द्वारा मुक्त किया गया ॥ १८ ॥

भरत०—यदि यही बात थी तो नलागिरि को पकड़ने हेतु छोड़े गये तुम्हारे स्वामी पुनः क्यों नहीं पकड़े गये ?

यौग०—लोकनिन्दा की डर से उसने ऐसा नहीं किया ।

भरतरोहकः—अपरोक्षराज्यव्यवहारो भवानिति ब्रवीति समरावर्जितेषु शत्रुषु किमाह शास्त्रम् ?

यौगन्धरायणः—वधः

भरतरोहकः—वधार्हो वत्सराजश्चेत् किमस्माभिः स सत्कृतः ?

यौगन्धरायणः—एतदवेक्ष्य खलु यदस्य शरीरं नापहृतम्

भरतरोहकः—एतदपि सम्भाव्यं मन्यते स्वामो।

यौगन्धरायणः—कः संशयः ?

हस्तप्राप्तो हि वो राजा रक्षितस्तेन साधुना।
न ह्यनारुह्य नागेन्द्रं वैजयन्ती निपात्यते॥ १९॥

---

अपरोक्षः राज्यव्यवहारः यस्य सः अपरोक्षराज्यव्यवहारः=साक्षात्कृतराज्यतन्त्रः, इति=एवम्, राजनीतिवेत्ता सन्नपि अर्थहीनं ब्रूते, समरे अवजितेषु समरावर्जितेषु=रणक्षेत्रवशीभूतेषु, शत्रुषु=रिपुषु, किमाह शास्त्रम् ?—शास्त्रेषु किं विधानं वर्तत इत्याशयः—

अन्वयः—हस्तप्राप्तः वः राजा तेन साधुना रक्षितः हि, नागेन्द्रम्, अनारुह्य वैजयन्ती न निपात्यते।

व्याख्या—हस्तप्राप्तः=कराऽधिगतः, सुखमाक्रमणीयतां गतो वा वः=

---

भरत०—राजनीति के ज्ञाता होते हुए भी आप ऐसी बात कहते हैं। समर में बन्दी किये हुए शत्रु के लिये शास्त्र में क्या विधान वर्णित है ?

यौग०—वध।

भरत०—वध के लायक भी वत्सराज का हमलोगों ने वध क्यों नहीं किया ? अर्थात् हमलोगों ने वत्सराज का वध न करके उनके ऊपर अनुग्रह ही किया।

यौग०—इसी का ख्याल करके ही तो महासेन का वध नहीं किया गया।

भरत०—इसको भी तुम्हारे स्वामी सम्भव मानते हैं ?

यौग०—इसमें क्या सन्देह है ?

अपने हाथ में प्राप्त होने पर भी उस सज्जन पुरुष ने आपके राजा

भरतरोहकः—भवतु भवतु । महासेनस्य प्रतिकूलं कृत्वा कौशाम्बीं प्रति का कृता ते बुद्धिः ?

यौगन्धरायणः—अहो हास्यमभिधानम् !

भवतां चाग्रतो यातः शेषकार्येषु का कथा ।
समूलं वृक्षमुत्पाट्य शाखाश्छेत्तुं कुतः श्रमः ॥ २० ॥

---

युष्माकं, राजा=महासेनः, तेन=प्रथितेन, साधुना=वत्सराजेन, रक्षितः=न व्यापादितः, हि=निश्चयेन, नागेन्द्रम्=वारणेन्द्रम्, अनारुह्य=आरोहणमकृत्वैव, वैजयन्ती=पताका, न=नहि, निपात्यते=हस्तगतो भवति । अनुष्टुब्वृत्तमत्र ॥ १९ ॥

महासेनस्य=एतन्नामकस्य नृपस्य, प्रतिकूलं कृत्वा=अप्रियं विधाय कौशाम्बीं, प्रति=कौशाम्बीं प्रयाणाय, का कृता=विहिता, ते=तव, बुद्धिः=मनीषा ?

अन्वयः—भवतां च अग्रतः यातः शेषकार्येषु का कथा, समूलं वृक्षम् उत्पाट्य शाखाः छेत्तुं कुतः श्रमः ।

व्याख्या—भवतां च=मदपकारं कुर्वतां, अथवा मम सद्योवधममिलाषवतां युष्माकं अग्रतः यातः=समक्षं भीतिरहितः संस्थितोऽहम्, शेषकार्येषु=कौशाम्बीप्रयाणेषु, का कथा=का वार्ता ?, समूलं=मूलयुतम्, वृक्षम्=विटपम्, उत्पाट्य=निपात्य, शाखाः=तरुस्कन्धादीन् छेत्तुं=कर्तितुं, निपातितुं वा, कुतः श्रमः=कियान् प्रयासः, न किमपि यत्नमित्याशयः । अनुष्टुब्वृत्तमत्र ॥ २० ॥

---

महासेन की रक्षा की । गज पर आरूढ़ हुए बिना उसके ऊपर की पताका प्राप्त नहीं की जा सकती ॥ १९ ॥

भरत०—अच्छा, अच्छा, महासेन के प्रतिकूल कार्य करके । कौशाम्बी प्रयाण के विषय में तुम्हारा क्या विचार है ?

यौग०—यह तो अत्यन्त हास्यजनक कथन है—

मैं तो आपलोगों के सामने हूँ । कौशाम्बी जाने की तो बात दूर रही । जड़ से पेड़ को उखाड़ने पर डाल काटने में क्या परिश्रम है ? ॥ २० ॥

(प्रविश्य)

काञ्चु०—( कर्णे ) एवमिव ।

भरतरोहकः—प्रकाशमुच्यताम् ।

काञ्चु०—

कारणैर्बहुभिर्युक्तैः कामं नापकृतं त्वया ।
गुणेषु न तु मे द्वेषी भृङ्गारः प्रतिगृह्यताम् ॥ २१ ॥

यौगन्धरायणः—हा धिक् ।

गृहा न निर्वान्ति मया प्रदीपितास्तथैव तावद्धृदयानि मन्त्रिणाम् ।

---

अन्वयः—त्वया कामं बहुभिः युक्तैः कारणैः न अपकृतम्, मे गुणेषु न द्वेषः, भृङ्गारः प्रतिगृह्यताम् ।

व्याख्या—त्वया=यौगन्धरायणेन, कामं=पर्याप्तं, बहुभिः=नैकविधैः, युक्तैः=समुचितैः, कारणैः=हेतुभिः, न=नैव, अपकृतम्=अपकारो विहितमिति मन्ये, मे=मम, गुणेषु=प्रशंसनीयकलासु, न=नहि, द्वेषः=द्रोहः, भृङ्गारः कनकविनिर्मितजलपात्रविशेषम्, प्रतिगृह्यताम्=अङ्गीक्रियताम् । अनुष्टुब्वृत्तम् ॥ २१ ॥

अन्वयः—मया प्रदीपिताः गृहाः न निर्वान्ति तथैव मन्त्रिणां हृदयानि तावत् (न निर्वान्ति) दण्डधारिणः मम इयं पूजा तु हि कृतापराधस्य सत्कृतिः वधः ।

---

( प्रवेश कर )

कञ्चुकीय०—( कान में ) इस प्रकार से ।

भरत०—सुस्पष्ट कहो ।

काञ्चु०—

अनेक कारणों से मैं तुम्हारे किये हुए अपकार को अपकार नहीं मानता । मेरा गुणों से द्वेष नहीं है, अतः स्वर्ण रचित इस पात्र विशेष भृङ्गार को पारितोषिक रूप से अङ्गीकार करो ॥ २१ ॥

यौग०—हाय ! धिक्कार है ।

मैंने जिन घरों को जलाया है, वे और अमात्यों के हृदय आज तक

इयं तु पूजा मम दण्डधारिणः कृतापराधस्य हि सत्कृतिर्वधः ॥ २२ ॥

( नेपथ्ये हाहाकारः क्रियते )

भरतरोहकः—अये,

को नु खल्वेष सहसा प्रासादाग्राद् विनिःसृतः ।
श्येनपक्षाभिमृष्टानां कुररीणामिव ध्वनिः ॥ २३ ॥

---

व्याख्या—मया=यौगन्धरायणेन, प्रदीपिताः=नलागिरिचित्तोद्भ्रमणाय वह्निना प्रज्वालिताः, गृहाः=सामग्रीविरहितानि भवनानि, न=नहि, निर्वान्ति=शाम्यन्ति, तथैव=तेनैव प्रकारेण, मन्त्रिणां=सचिवानां, हृदयानि=चित्तानि, तावत्=तावत्कालपर्यन्तं ( न निर्वान्ति=नोपशाम्यन्ति ) दण्डधारिणः=दण्डप्रणयनाधिकृतात् महासेनात् मम=दण्डार्हस्य यौगन्धरायणस्य, इयं पूजा=एष सत्कारः, नैव समुचित इति शेषः, तु=किन्तु, हि=निश्चयेन, कृतापराधस्य=विहितापकृतेर्मम, सत्कृतिः=सम्मानन्तु वधः=प्राणाय हरणमेव, विद्यत इति शेष, वंशस्थविलं वृत्तम् 'वदन्ति वंशस्थविलं जतौ जरौ, इति लक्षणात् ॥ २२ ॥

अन्वयः—श्येनपक्षाभिमृष्टानां कुररीणाम् ध्वनिः इव कः एषः (ध्वनिः) प्रासादाग्रात् विनिःसृतः ।

व्याख्या—श्येनपक्षाभिमृष्टानां=श्येनसम्प्रहारकष्टमनुभवतां, कुररीणाम्=पक्षिविशेषाणाम्, ध्वनिः=शब्दा, इव=यथा, कः=कीदृशः, एषः=अयं, (ध्वनिः=शब्दः) प्रासादाग्रात्=हर्म्याग्रभागात्, विनिःसृतः=सहसा प्रादुर्भूतः । उपमालंकारः । अनुष्टुब्वृत्तम्—॥ २३ ॥

---

शीतल नहीं हो रहे हैं । दण्ड विधान करने वाले महासेन के द्वारा मेरी यह अभ्यर्थना की जा रही है । अपराध करनेवाले की पूजा तो केवल वध है ॥ २२ ॥

( नेपथ्य में हाहाकार होता है । )

भरत०—अरे ।

बाज द्वारा आक्रमण की हुई कुररी के शब्द के समान यह एकाएक महल में कैसा शब्द हो रहा है ॥ २३ ॥

भोः ! ज्ञायतां शब्दः ।

काञ्चु०—यदाज्ञपयत्यार्यः । ( निष्क्रम्य प्रविश्य ) एषा तत्रभवत्यङ्गारवती शोकाभिभूतहृदया प्रासादाच्छरीरं विमोक्तुकामा महासेनेनाभिहिता यथा—क्षत्रधर्मेणोद्दिष्टस्ते दुहितुर्विवाहः । किमिदानीं हर्षकाले सन्तप्यसे तच्चित्रफलकस्थयोर्वत्सराजवासवदत्तयोर्विवाहोऽनुष्ठीयताम् इति । तत्र हि,

स्त्रीजनेनाद्य सहसा प्रहर्षव्याकुलक्रमा ।
क्रियते मङ्गलाकीर्णा सबाष्पा कौतुकक्रिया ॥ २४ ॥

---

शोकाभिभूतहृदया=कष्टसन्तप्तचित्ता, अङ्गारवती = महासेनस्य धर्मपत्नी, प्रासादात् = भवनाग्रभागात् , ( पतित्वा ) शरीरं = देहं, विमोक्तुकामा = परित्यागाभिलाषुका, महासेनेन = एतन्नामकेन नृपेण, अभिहिता= कथिता, ते = तव, दुहितुः = आत्मजायाः, विवाहः = परिणयः, क्षत्रधर्मेण, उद्दिष्टः = सम्पन्नः । इदानीं = साम्प्रतं, हर्षकाले = आनन्दसमये, किम् = कथं, सन्तप्यसे = सन्तापं करोषि, तत् = तस्माद्धेतोः, चित्रफलकस्थयोः, वत्सराजवासवदत्तयोः=एतन्नामकयोरुभयोः, विवाहः = पाणिग्रहणसंस्कारः, अनुष्ठीयताम् = सम्पाद्यताम् ।

अन्वयः—प्रहर्षव्याकुलक्रमा मङ्गलाकीर्णा सबाष्पा कौतुकक्रिया अद्य स्त्रीजनेन सहसा क्रियते ।

---

अरे ! मालूम करो कि यह कैसी आवाज है ?

काञ्चु०—जैसी आर्य की आज्ञा । ( निकलकर और पुनः प्रवेशकर ) यह रानी अङ्गारवती शोकाभिभूत होने के कारण महल से कूदकर प्राण-परित्याग करना चाहती थी, किन्तु उनसे महाराज महासेन ने यह बात कही—कि तुम्हारी तनया वासवदत्ता का परिणय क्षात्रधर्म के अनुसार हुआ है । इसलिये आनन्द के समय सन्ताप क्यों कर रही हो ? एतावता चित्रफलकस्थ वत्सराज और वासवदत्ता का विवाह कार्य सम्पन्न कर दो । अतः वहाँ पर—

आज क्रन्दन करती हुई स्त्रियाँ मङ्गल-कार्य सम्पादित कर रही हैं,

यौगन्धरायणः—एवं सम्बन्धं मन्यते महासेनः। तेन ह्यानीयतां शृङ्गारः।

काञ्चु०—गृह्यताम्। ( उपनयति )

भरतरोहकः—भो यौगन्धरायण! किं ते भूयः प्रियमुपहरति महासेनः।

यौगन्धरायणः—यदि मे महासेनः प्रसन्नः, किमतः परमिच्छामि।

( भरतवाक्यम् )

---

व्याख्या—प्रहर्षेण व्याकुलः भिन्नः क्रमः कार्यपरिपाटी यस्या सा प्रहर्षव्याकुलक्रमा = आनन्दविपर्यस्तारम्भा, मङ्गलाकीर्णा = पुष्पचन्दनभृतिभिः मङ्गलद्रव्यैः परिपूर्णा, सबाष्पा = अश्रुसमन्विता, कौतुकक्रिया = मङ्गलात्मकः परिणयविधिः, अद्य = अस्मिन्वासरे, स्त्रीजनेन = वनितावृन्देन, सहसा = अकस्मात्, क्रियते=सम्पाद्यते। अनुष्टुब्वृत्तमत्र ॥ २४ ॥

---

यौग०—महासेन ने इस प्रकार का सम्बन्ध अङ्गीकार कर लिया है। ठीक है, भृङ्गार ले आओ।

काञ्चु०—ग्रहण कीजिये। ( पास ले आता है। )

भरत०—हे यौगन्धरायण! अब महासेन तुम्हारा क्या अभीष्ट सम्पादन करें?

यौग०—यदि महासेन मेरे ऊपर प्रसन्न हैं, तो इससे ज्यादा हमें क्या चाहिये? अर्थात् कुछ भी नहीं।

( भरतवाक्य )

गायें सुखी हों। दुश्मनों का छल शान्त हो। हमारे श्रेष्ठ राजा इस

भवन्त्वरजसो गावः परचक्रं प्रशाम्यतु ।
इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः ॥ २५ ॥

( निष्क्रान्ताः सर्वे । )

चतुर्थोऽङ्कः ।

इति प्रतिज्ञानाटिकावसिता ।

---

अन्वयः—गावः अरजसः भवन्तु, परचक्रम् प्रशाम्यतु, इमाम् अपि कृत्स्नां महीं नः राजसिंहः प्रशास्तु ।

व्याख्या—गावः=धेनवः, अरजसः=कष्टविरहिताः, भवन्तु=सन्तु, परचक्रं=रिपुसैन्यम्, अरिकपटं वा, प्रशाम्यतु=शान्तिमधिगच्छतु, इमाम् अपि=आत्माभिरधिष्ठिताम् अपि, कृत्स्नां=सम्पूर्णां, महीं=धरां, नः=अस्माकं, राजसिंहः=सिंहतुल्यो भूपतिः प्रशास्तु=शासनं विदधातु, अनुष्टुब्वृत्तमत्र ॥ २५ ॥

विहारप्रदेशीय 'रोहतास' मण्डलान्तर्गत 'उमापुर'
ग्रामवास्तव्येन श्री शिवकुमारमिश्राऽऽत्मजेन
रमाशंकरमिश्रेण विहितेयमर्चनाऽऽख्या-
टीकाऽवसिता ।

---

किन्तु प्रसन्नता-से समस्त कार्य अन्य ही तरह से हो रहे हैं। मङ्गल की सम्पूर्ण सामग्रियाँ इधर-उधर बिखरी पड़ी हैं ॥ २४ ॥

सारी पृथिवी का भी शासन करें ॥ २५ ॥

( सब चले जाते हैं । )

॥ चतुर्थ अङ्क समाप्त ॥



॥ इस प्रकार प्रतिज्ञानाटिका समाप्त हुई ॥

# श्लोकानुक्रमणिका

## नाटक-[illegible]



### अभिज्ञानश[illegible]

"किशोरकेलि" संस्कृत-हि[illegible]

सं० प्रो० कान्ताना[illegible]

शास्त्री जी द्वारा सम्पादित विस्तृत [illegible]
प्रतिशब्द-पर्याय, कोष, व्याकरण, समास, [illegible]
के अभिप्राय को बड़ी सरलता से व्यक्त कि[illegible]
सुविस्तृत नोट्स, समालोचना और पत्रा[illegible]
है। संस्कृत-हिन्दी-अंग्रेजी के परीक्षार्थी छा[illegible]
और नोट्स ही पर्याप्त हैं।

### उत्तररामच[illegible]

'चन्द्रकला' संस्कृत हि[illegible]

प्रोफेसर कान्तानाथ शास्त्री तेलंग एम. ए. लिखित विशेष विवरण, 'नोटस' समलंकृत इसकी सुविस्तृत सरल व्याख्या में प्रत्येक विषय का इतना सुन्दर और सरल रीति से स्पष्ट प्रतिपादन है जो किसी भी अन्य टीका में मिलना दुर्लभ है। यह संस्करण संस्कृत-हिन्दी-अंग्रेजी कालेज के छात्रों के लिए समानरूप से उपयोगी है। षष्ठांक ९—००, सम्पूर्ण ५०—००

### मृच्छकटिकम्

'प्रबोधिनी' संस्कृत-हिन्दी टीकोपेतम् व्या० डॉ० प्रभुलाल गोस्वामी

काशी हिन्दू विश्वविद्यालय के यशस्वी प्रोफेसर पं० कान्तानाथ शास्त्री तेलंग विरचित हिन्दी समालोचना, नोट्स आदि से सुसंस्कृत इसकी आधुनिक संस्कृत हिन्दी टीका के सामने अन्य प्रकाशित सभी टीकाएं नगण्य हो चुकी हैं। प्रत्येक विषय का इतना सुन्दर और सरल रीति से स्पष्ट प्रतिपादन किसी अन्य टीका में मिलना दुर्लभ है। ६०—००

### स्वप्नवासवदत्तम्

'प्रबोधिनी' संस्कृत-हिन्दी व्याख्योपेतम्

काशी हिन्दू विश्वविद्यालय के प्रोफेसर पं० कान्तानाथ शास्त्री तेलंग सम्पादित समालोचनात्मक हिन्दी प्रस्तावना से सुसज्जित संस्कृत-हिन्दी व्याख्या सहित यह संस्करण छात्रों के लिये अधिक उपादेय है। अंग्रेजी छात्रों के लिये तो शास्त्री जी की समालोचनात्मक भूमिका ही परीक्षा के लिये पर्याप्त है। २५-००

---

अपरं च प्राप्तिस्थानम्—चौखम्बा संस्कृत पुस्तकालय
कचौड़ी गली, वाराणसी—२२१००१